॥ श्रीः ॥

# ॥ अलङ्कारचिन्तामणिः ॥

## ॥ भगवज्जिनसेनाचार्यप्रणीतः ॥

सोलापूरनिवासिभिः दोसी इत्युपाभिधैः "सखाराम नेमिचंद" इत्येतैर्दिगम्बरजैनविद्यार्थिनामध्ययनार्थं कोल्हापूरस्थजैनेन्द्रमुद्रणालये मुद्राप्य प्रकाशितः ॥

॥ शकाब्दाः १८२९ ॥

मूल्यं १२ आणकाः

श्रीमदनन्तनाथाय नमः

# ॥ अलङ्कारचिन्तामणिः ॥

प्रथमपरिच्छेदः ।

श्रीमते सर्वविज्ञानसाम्राज्यपदशालिने ॥
धर्मचक्रेशिने सिद्धशान्तयेऽस्तु नमोनमः ॥ १ ॥
जगदानन्दिनीं तापहारिणीं भारतीं सतीम् ॥
श्रीमतीं चन्द्ररेखाभां नमामि विबुधप्रियाम् ॥ २ ॥
श्रीमत्समन्तभद्रादिकविकुञ्जरसञ्चयम् ॥
मुनिवन्द्यं जनानन्दं नमामि वचनश्रियै ॥ ३ ॥
अलङ्कारमलङ्कारचिन्तामणिसमाह्वयम् ॥
इष्टालङ्कारदं सूरिचेतोरञ्जनदं ब्रुवे ॥ ४ ॥
अत्रोदाहरणं पूर्वपुराणादिसुभाषितम् ॥
पुण्यपूरुषसंस्तोत्रपरं स्तोत्रमिदं ततः ॥ ५ ॥

सन्तः सन्तु मम प्रसन्नमनसो वाचां विचारोद्यताः ।
सूतेऽम्भः कमलानि तत्परिमलं वाता वितन्वंति यत् ॥
किंवाऽभ्यर्थनयाऽनया यदि गुणोऽस्त्यासां ततस्ते स्वयं ।
कर्तारः प्रथनं न चेदथ यशःप्रत्यर्थिना तेन किम् ॥ ६ ॥
शब्दार्थालंकृतीद्धं[1] नवरसकलितं रीति[2]भावाभिरामं ।
व्यंग्याद्यर्थं विदोषं गुणगणकलितं नेतृसद्वर्णनाढ्यम् ॥
लोकद्वन्द्वोपकारि स्फुटमिह तनुतात् काव्यमग्र्यं सुखार्थी ।
नानाशास्त्रप्रवीणः कविरतुलमतिः पुण्यधर्मोरुहेतुम् ॥ ७ ॥

प्रतिभोज्जीवनो नानावर्णनानिपुणः कृती ॥

---

१ चित्रवक्रोक्त्यनुप्रासादयः ॥ २ रीतयो वैदर्भ्यादयः । भावा ध्वन्यादयः ॥

नानाभ्यासकुशाग्रीयमतिर्व्युत्पत्तिमान् कविः ॥ ८ ॥
व्युत्पत्त्यभ्याससंस्कार्या शब्दार्थघटनाघटा ॥
प्रज्ञा नवनवोल्लेखशालिनी प्रतिभाऽस्य धीः ॥ ९ ॥
*छन्दोऽलङ्कारशास्त्रेषु गणिते कामतन्त्रके ॥*
शब्दशास्त्रे कलाशास्त्रे तर्काध्यात्मादितन्त्रके ॥ १० ॥
पारम्पर्योपदेशेन नैपुण्यपरशालिनी ॥
प्रतिपत्तिर्विशेषेण व्युत्पत्तिरभिधीयते ॥ ११ ॥
गुरूणामन्तिके नित्यं काव्ये यो रचनापरः ॥
अभ्यासो भण्यते सोऽयं तत्कामः कश्चिदुच्यते ॥ १२ ॥
जनानां दृष्टव्यापारैश्छन्दोऽभ्यासो यथा—
अम्भोभिः सम्भृतः कुम्भः शोभते पश्य भो सखे ॥
दभ्रः शुभ्रपटो भाति सीतिमानं प्रपश्य भोः ॥ १३ ॥
वधू रमेव भातीयं नरो भाति स्मरो यथा ॥
उखा भात्यन्नपूर्णेयं सखा भाति विधूपमः ॥ १४ ॥
शय्योत्थितः कृतस्नानो वराक्षतसमन्वितः ॥
गत्वा देवार्चनं कृत्वा श्रुत्वा शास्त्रं गृहं गतः १५ ॥
एवमत्रैव छन्दांस्यभ्यसेत् ॥

मनश्छदोऽन्तरे यथा—

सा भासते चन्द्रमसः कलेयं । जिनेशिनो वागिव मन्मनोज्ञा ॥
प्रत्यर्थिपृथ्वीभृदनेकदन्ति- । कण्ठीरवोऽभूद्भरतेशचक्री ॥
चादयो न प्रयोक्तव्या विच्छेदात्परतो यथा ॥
नमो जिनाय शान्ताय कुकर्मपरिहारिणे ॥ १६ ॥

---

१ लौकिकव्यवहारेषु निपुणता व्युत्पत्तिः ॥ २ काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरभ्यासः । सतो गुणाधानं संस्कारः ॥ ३ त्रैकालिकी बुद्धिः प्रज्ञा ॥ ४ आगमशास्त्रे ॥ ५ दभ्र कृशं तन्वित्यमरः ॥ ६ स्थाल्युखा कुण्डम् ॥

धातूनामविभक्तीनां क्वचिद्भेदे यतिच्युतिः ॥
युक्ताक्षरपरत्वेऽपि श्लथोच्चार्याः क्वचिद्यथा ॥ १७ ॥
जिनेशपदयुगं वन्दे भक्तिभरसन्नतः ॥
समस्ताघविनाशं स्वामिनं धर्मोपदेशिनम् ॥ १८ ॥
मुनये सर्वविद्येशाय नमो धर्मशालिने ॥
सुरासुरार्च्यश्रीशाय प्रायः सर्वं न तद्भवेत् ॥ १९ ॥
विकस्वरोपसर्गेण[1] विच्छेदः श्रुतिसौख्यकृत् ॥
यथाऽर्हत्पदयुग्मं प्रणमामि सुरपूजितम् ॥ २० ॥
पदं यथा यथा तोषः सुधियामुपजायते ॥
तथा तथा सुमाधुर्यनिमित्तं यतिरुच्यते ॥ २१ ॥
भारती मधुराऽल्पार्थसहिताऽपि मनोहरा ॥
तमस्समूहसङ्काशा पिकीव मधुरध्वनिः ॥ २२ ॥
तानि वर्ण्यानि कथ्यन्ते महाकाव्यादिषु स्फुटम् ॥
कविवृन्दारकैर्यानि प्रबन्धेषु बबन्धिरे ॥ २३ ॥
[2]भूभृत्पत्नी पुरोधाः कुलवरतनुजऽऽमात्यासेनेशदेश- ।
ग्रामश्रीपत्तनाऽब्जाकरशरधिनदोद्यानशैलाटवीद्धाः ॥
मन्त्रो दूतः प्रयाणं समृगयतुरगेभर्त्विनेन्द्वाश्रमाजि- ।
श्रीवीवाहावियोगास्सुरतवरसुरापुष्पवार्नर्मभेदाः ॥ २४ ॥
नृपे यशः प्रतापाज्ञेऽसत्सन्निग्रहपालने ॥
सन्धिविग्रहयानादिशस्त्राभ्यासनयक्षमाः ॥ २५ ॥
अरिषड्वर्गजेतृत्वं धर्मरागो दयालुता ॥
प्रजारागो जिगीषुत्वं धैर्यौदार्यगभीरताः ॥ २६ ॥

---

१ प्राद्युपसर्गेण ॥ २ राजा । तत्पत्नी । पुरोहितः । पुत्रः । मन्त्री । सेनापतिः । सम्पद्युक्तं पत्तनम् । कमलसरोवरम् । नदी । आलोचना । वचोहरः । प्रस्थानम् । मृगया । अश्वः । गजः । षट् ऋतवः । सूर्यचन्द्रौ । भव्याश्रमः । युद्धं । कल्याणं । निधुवनम् । स्वयंवरः । मद्यपानम् । पुष्पावचयः । जलक्रीडा एतानि वर्ण्यानि ॥

अविरुद्धत्रिवर्गत्वं सामादिविनियोजनम् ॥
त्यागसत्यसदाशौचशौर्यैश्वर्योद्यमादयः ॥ २७ ॥
देव्यां त्रपा विनीतत्वव्रताचारसुशीलताः ॥
प्रेमचातुर्यदाक्षिण्यलावण्यकलनिस्वनाः ॥ २८ ॥
दयाशृंगारसौभाग्यमानमन्मथविभ्रमाः ॥
पत्तलोपरितद्गुल्फनखजंघासुजानुभिः ॥ २९ ॥
ऊरुश्रोणीसुरोमालीवलित्रितयनाभयः ॥
मध्यवक्षःस्तनग्रीवाबाहुसांगुलिपाणयः ॥ ३० ॥
रदनाधरगण्डाक्षिभ्रूभालश्रवणानि च ॥
शिरोवेणीकबर्यादिगतिजात्यादिरेव च ॥ ३१ ॥
पुरोहिते निमित्तादिशास्त्रवेदित्वमार्जवम् ॥
विपदां प्रतिकर्तृत्वं सत्यवाक्शुचितादयः ॥ ३२ ॥
कुमारे राजभक्तिश्रीकलाबलविनीतताः ॥
शस्त्रशास्त्रविवेकित्वं वाह्याङ्गविहरादयः ॥ ३३ ॥
मन्त्री शुचिः क्षमी शूरोऽनुद्धतो बुद्धिभक्तिमान् ॥
आन्वीक्षिक्यादिविद्दक्षस्स्वदेशजहितोद्यमी ॥ ३४ ॥
सेनापतिरभीरस्त्रशस्त्राभ्यासे च वाहने ॥
राजभक्तो जितायासः सुधीरपि जयी रणे ॥ ३५ ॥
देशे मणिनदीस्वर्णधान्याकरमहाभुवः ॥
ग्रामदुर्गजनाधिक्यनदीमातृकतादयः ॥ ३६ ॥
ग्रामे धान्यसरोवल्लीतरुगोपुच्छ[1]चेष्टितम् ॥
ग्राम्यमौग्ध्यघटीयन्त्रे केदारपरिशोभनम् ॥ ३७ ॥
पुरे प्राकारतच्छीर्षवप्राट्टालकखातिकाः ॥
तोरणध्वजसौधाध्ववाप्यारामजिनालयाः ॥ ३८ ॥

---

१ गवां पुच्छमधिक चेष्टितं व्यापारः ॥

सरोवरेऽब्जभृङ्गाम्बुलहरीगजकेलयः ॥
हंसचक्रद्विरेफाद्यास्तीरोद्यानलतादयः ॥ ३९ ॥
अब्धौ विद्रुममुक्तोर्मिपोतेभमकरादयः ॥
सरित्प्रवेशसंक्षोभकृष्णाब्जाघ्र्मायितादयः ॥ ४० ॥
नद्यामम्बुधियायित्वं हंसमीनाम्बुजादयः ॥
विरुतं तटवल्ल्यो नलिन्युत्पलिनीस्थितिः ॥ ४१ ॥
उद्याने कलिकापुष्पफलवल्लीकृतादयः ॥
पिकालिकेकिचक्राद्याः पथिकक्रीडनस्थितिः ॥ ४२ ॥
अद्रौ शृङ्गगुहारत्नवनकिन्नरनिर्झराः ॥
सानुधातुसुकूटस्थमुनिवंशसुमोच्चयाः ॥ ४३ ॥
अरण्येऽहिहरिव्याघ्रवराहहरिणादयः ॥
द्रुमा भल्लूकघूकाद्या गुल्मवल्मीकपर्वताः ॥ ४४ ॥
मन्त्रे पञ्चाङ्गतोपायशक्तिनैपुण्यनीतयः ॥
दूते स्वपरपक्षश्रीदोषवाक्कौशलादयः ॥ ४५ ॥
प्रयाणेऽश्वखुरोद्भूतरजोवाद्यरवध्वजाः ॥
भूकम्पो रथहस्त्यादिसंघट्टः पृतनागतिः ॥ ४६ ॥
मृगयायां मृगत्राससञ्चारादि कुदृष्टिभिः ॥
कृतं संसारभीरुत्वजननाय वदेत्क्वचित् ॥ ४७ ॥
अश्वे वेगित्वसल्लक्षगतिजात्युच्चतादयः ॥
गजेऽरिव्यूहभेदित्वकुम्भमुक्तामदालयः ॥ ४८ ॥
मधौ दोलानिलालिश्रीझङ्कारकलिकोद्गमाः ॥
सहकारविटप्यादिसुमनोमञ्जरीलताः ॥ ४९ ॥

१ शङ्खशब्दः ॥ २ विः पक्षिपरमात्मनोः । पक्षिणां ध्वनिः ॥ ३ पञ्चांगत्वम् । सामाद्युपायाः । प्रभुशक्त्यादित्रयम् । सन्धिविग्रहादिषट् ॥ ४ मण्यादि लक्षणम् । रेचकाद्याः पञ्च गतयः । बाह्लीकादिजातयः ॥

निदाघे मल्लिकातापसरःपथिकशोषिताः ॥
मरीचिकामृगभ्रान्तिः प्रपा तत्रत्ययोषितः ॥ ५० ॥
वर्षासु घनकेकिश्रीझञ्झानिलसुवाःकणाः ॥
हंसनिर्गतिकेतक्यः कदम्बमुकुलादयः ॥ ५१ ॥
शरदीन्द्विनसुव्यक्तिहंसपुङ्गवहृष्टयः ॥
शुभ्राभ्रस्वच्छवाःपद्मसस्वच्छदजलाशयाः ॥ ५२ ॥
हेमन्ते हिमसंलग्नलतामुनितपःप्रभाः ॥
शिशिरे च शिरीषाब्जदाहशैत्यप्रकृष्टयः ॥ ५३ ॥
द्युमणावरुणत्वाब्जचक्रवाकाक्षिहृष्टयः ॥
तमःकुमुदतारेन्दुप्रदीपकुलटार्तयः ॥ ५४ ॥
चन्द्रेऽभ्रकुलटाचक्रचोरध्वान्तवियोगिनाम् ॥
आर्तिरुज्वलता वार्धिकैरवेन्द्वश्मरहृष्टयः ॥ ५५ ॥
आश्रमे मुनिपादान्ते सिंहेभैणादिशान्तता ॥
सर्वर्तुफलपुष्पादिश्रीरङ्गीकृतपूजनम् ॥ ५६ ॥
युद्धे तूर्यनिनादासिस्फुलिङ्गशरसन्धयः ॥
छिन्नातपत्रवर्मेभरथध्वजभटादयः ॥ ५७ ॥
विवाहो नामकल्याणगर्भावतरणादिकं ॥
तत्रेन्द्रदन्तिमेर्वब्धिश्रेणीसुररवादयः ॥ ५८ ॥
विवाहे स्नानशुभ्राङ्गभूषाशोभनगीतयः ॥
विवाहमण्डपो वेदीनाद्यवाद्यरवादयः ॥ ५९ ॥
विरहे तापनिश्वासमनश्चिन्ताकृशाङ्गताः ॥
शिशिरौष्ण्यनिशादैर्घ्यं जागरा हासहानयः ॥ ६० ॥
सुरते सीत्कृतिग्रीवानखदन्तक्षतादयः ॥
काञ्चीकङ्कणमञ्जीररवभर्त्यायितादयः[1] ॥ ६१ ॥

---

१ पुरुष इवाचरणम् ॥

स्वयंवरे सुसन्नाहो मञ्चमण्डपकन्यकाः ॥
तस्या भूपान्वयख्यातिसम्पदाकारवेदनम् ॥ ६२ ॥
मधुपानेऽलिमाश्रित्य भ्रमप्रेमादिरुच्यताम् ॥
महान्तो न सुरां दूष्यां पिबन्ति पुरुदोषतः ॥ ६३ ॥
पुष्पोपचयने पुष्पावचयो वक्रसूक्तयः ॥
गोत्रस्खलनमाश्लेषः परस्परविलोकनम् ॥ ६४ ॥
अम्भःकेलौ जलक्षोभो हंसचक्रापसर्पणम् ॥
भूषाच्युतिपयोबिन्दुलग्नास्यजलजभ्रमाः ॥ ६५ ॥
वर्ण्यादिमात्रता प्रोक्ता यथालङ्कारतन्त्रकम् ॥
वर्णनाकुशलैश्चिन्त्यमनेकविधमस्ति तत् ॥ ६६ ॥
चन्द्रार्कोदयमन्त्रदूतसलिलक्रीडाकुमारोदयो-
द्यानाम्भोधिपुरर्तुशैलसुरताजीनां प्रयाणस्य च ॥
वर्ण्यत्वं मधुपाननायकपदव्योर्विप्रलम्भस्य च
काव्येऽष्टादशसङ्ख्यकं युतविवाहस्यापि केचिद्विदुः ॥ ६७ ॥
कवीनां समयस्त्रेधा निबन्धोऽप्यसतस्सतः ॥
अनिबन्धस्सजात्यादेर्नियमेन समासतः ॥ ६८ ॥

असतोऽपि निबन्धो यथा—

गिरौ रत्नादि हंसादि स्तोकपद्माकरादिषु ॥
नीरे भाद्यं खगङ्गायां जलजाद्यं नदीष्वपि ॥ ६९ ॥
तमसः सूच्यभेद्यत्वं मुष्टिग्राह्यत्वमुच्यते ॥
अञ्जलिग्राह्यता चन्द्रत्विषः कुम्भोपवाह्यता ॥ ७० ॥
प्रतापे रक्ततोष्णत्वे कीर्तौ हंसादिशुभ्रता ॥
कृष्णत्वमपकीर्त्यादौ रक्तत्वं कोपरागयोः ॥ ७१ ॥
चतुष्टत्वं समुद्रस्य वियोगः कोकयोर्निशि ॥
चकोराणां सुराणां च ज्योत्स्नावासं निगद्यते ॥ ७२ ॥
रमायाः पद्मवासित्वं राज्ञो वक्षसि च स्थितिः ॥

समुद्रमथनं तत्र सुरेन्द्रश्रीसमुद्भवः ॥ ७३ ॥

सतोऽप्यनिबन्धो यथा—

चन्दने फलपुष्पे च सुरभौ मालतीसुमम् ॥
शुक्ले पक्षे तमोऽशुक्ले ज्योत्स्नाफलमशोकके ॥ ७४ ॥
रक्तिमा कामिदन्तेषु हरितत्त्वं च कुन्दके ॥
दिवानिशोत्पलाब्जानां विकासित्वं न वर्ण्यताम् ॥ ७५ ॥

नियमेन निबन्धो यथा—

सामान्येन तु धावल्यं पत्रपुष्पाम्बुवाससाम् ॥
चन्दनं मलयेष्वेव मधावेव पिकध्वनिम् ॥ ७६ ॥
अम्बुदाम्बुधिकाकाहिकेशभृङ्गेषु कृष्णताम् ॥
बिम्बबन्धूकनीरेषु सूर्यबिम्बे च रक्तताम् ॥ ७७ ॥
रवं नाख्यं मयूराणां वर्षास्वेव विवर्णयेत् ॥
नियमस्य विशेषोऽन्यः कश्चिदत्र प्रकाश्यते ॥ ७८ ॥
*शुभ्रमिन्द्रद्विपं ब्रूयात्त्रीणि सप्त चतुर्दश ॥*
भुवनानि चतस्रोऽष्टौ दश वा ककुभो मताः ॥ ७९ ॥
वबौ डलौ रलौ चैते यमके श्लेषचित्रयोः ॥
न भिद्यन्ते विसर्गानुस्वारौ चित्राय नो मतौ ॥ ८० ॥

यमकस्योदाहरणम्—

बलीद्धो भरतश्चक्री वलीशो विबभौ भुवि ॥
मदम्भादिकमायत्नमदम्बादिपतिः पुरुः ॥ ८१ ॥
त्रिवलीशोभितः अमलं वादिपतिर्विबभावित्यत्रापि सम्बध्यतेऽस्य विपरिणमीदम् ॥ विषमपदानामेवं सर्वत्र द्रष्टव्यम् ।

उपमाश्लेषस्योदाहरणम्

जडात्मा स्यात्सदाक्षोभी समुद्रो वा पुमान् लोके ॥

चित्रस्योदाहरणम्—

इलापाला सुलातीला कलामालाकुलामिलाम् ॥ ८१ ॥

गोमूत्रिकाबन्धः । अष्टदलपद्मं च ॥ भूपालनशीला ईडा जिनस्तुतिः । इला इरा वाक् दिव्यध्वनिरिति वा । कलादियुतामिलां भुवं वा वाचं च ददाति ॥ [ इलापाला इला, (ईला वा) कलामालाकुलां इलां सुलातीत्यन्वयः । ]

वर्णभेदं विजानीयात्कविः काव्यमुखे पुनः ॥
सद्वर्णे सद्गणं कुर्यात्सम्पत्सन्तानसिद्धये ॥ ८२ ॥
वर्ण्यवर्णकयोर्लक्ष्मीः शीघ्रमेवोपजायते ॥
अन्यथैतद्द्वयस्यापि दुःखसन्ततिरञ्जसा ॥ ८३ ॥
झाज्जाच्चाच्छाट्टठाभ्यां ढणथपबभमैरालवात्षाद्दलाभ्यां ।
संयुक्तेऽक्षं विना स्यादशुभमितरतो वर्णतोभद्रमिद्धम् ॥
मोभूर्नोगौर्यभौवाः शशधरयुगलं मङ्गलं तोऽशुभः खं- ।
जोरस्सो भासुरमिः पवन इदमभद्रं त्रयं चादिकानाम् ॥ ८३ ॥
मगणादीनां भूरित्यादयोऽधिदेवताः ॥
बिन्दुसर्गौ पदादौ न कदाचन जञौ पुनः ॥
भवान्तावपि विद्येते काव्यादौ न कदाचन ॥ ८४ ॥
आभ्यां संप्रीतिरीभ्यां मुद्भवेदूभ्यां धनं पुनः ॥
ऋलृचतुष्टयतोऽकीर्तिरेचः सौख्यकरा स्मृताः ॥ ८५ ॥
कादिवर्णचतुष्काच्छ्रीरपकीर्तिश्चकारतः ॥
छकारात्प्रीतिसौख्ये द्वे मित्रलाभो जकारतः ॥ ८६ ॥
झाद्भीमृत्यू ततः खेदष्ठाद्दुःख शोभनं तु डात् ॥
ढोऽशोभादो भ्रमो णात्तु सुखं तात्थाद्रणं दधौ ॥ ८७ ॥
सुखदौ नात्प्रतापो भीः सुखान्तक्लेशदाहदः ॥
पवर्गो याद्रमा रेफाद्दाहो व्यसनदौ लवौ ॥ ८८ ॥
शषाभ्यां सुखखेदौ च सहौ च सुखदाहदौ ॥

---

१ नायककवीश्वरयोः ॥ २ अआ । इई । उऊ ॥ ३ ऋॠ । ऌॡ । एऐ ओ औ ॥

लस्तु व्यसनदः क्षस्तु सर्ववृद्धिप्रदो भवेत् ॥ ८९ ॥
एवं प्रत्येकमुक्तास्ते वर्णास्सत्यफलप्रदाः ॥
त्याज्यः स्याद्वर्णसंयोगस्तैलकर्पूरयोगवत् ॥ ९० ॥
प्रत्येकं तु गणा ज्ञेयास्सदसत्फलदा यथा ॥
याद्धनं राच्चभीदाहौ तः शून्यफलदो मतः ॥ ९१ ॥
भात्सुखं जाद्रुजा सात्तु क्षयो रैशुभदौ नमौ ॥
वदन्ति देवतां शब्दा भद्रादीनि च ये तु ते ॥ ९२ ॥
गणाद्वा वर्णतो वाऽपि नैव निन्द्याः कवीश्वरैः ॥
एतद्वर्णाभिविन्यासं काव्यं पद्यादितस्त्रिधा ॥ ९३ ॥
सच्छन्दोऽच्छन्दसी पद्यगद्ये मिश्रं तु तद्युगम् ॥
निबद्धमनिबद्धं वा कुर्यात्काव्यमुखं कविः ॥ ९४ ॥
आशीरूपं नमोरूपं वस्तुनिर्देशनं च वा ॥
स्वकाव्यमुखे स्वकृतं पद्यं निबद्धं परकृतमनिबद्धम् ॥
अन्यकाव्यसुशब्दार्थच्छायां नो रचयेत्कविः ॥
स्वकाव्ये सोऽन्यथा लोके पश्यतोहरतामटेत् ॥ ९५ ॥
समस्यापूरणं[2] कुर्यात्परशब्दार्थगोचरम् ॥
पराभिप्रायवेदित्वान्न कविर्दोषमृच्छति ॥ ९६ ॥
अस्ति स्तः सन्ति तस्याः कुचकलशतटे नास्ति न स्तो नसंति ॥
एतत्समस्यापूरणं यथा—

शुभ्रः श्रीहारयष्टिः शिशिरकरकलाकान्तिदीप्तिद्विरेफा- ।
स्सारामोदाब्जशङ्काजठरगवृषभप्राभवात्कालिमा स्यात् ॥
श्रीमन्नाभिप्रियाया नखरहतिकरोन्मर्दने घर्मपाथां- ।
स्यस्ति स्तः सन्ति तस्याः कुचकलशतटे नास्ति न स्तो न सन्ति ॥
मानस्तम्भो नटति नितरां सूर्यबिम्बस्य मूर्ध्नि ॥

---

१ अट संगमने ॥　२ संशयपूरणम् ॥

कान्त्या दीप्त्या जिनवरमहाबिम्बवृत्त्या च तेऽस्य।
मूलं गत्वा महयति रवौ बिम्बवृन्दं जिनानाम्॥
मानस्तम्भः पुरुजिनपतेः संसदीति स्तुतोऽमू-।
न्मानस्तम्भो नटति नितरां सूर्यबिम्बस्य मूर्ध्नि॥ ९८॥

नभसि नलिनपत्रे दन्तिनः सञ्चरन्ति॥

पुरुजिनवरवाणी सर्वभाषास्वभावा।
प्रगतनिखिलदोषाऽनन्तसौख्यप्रदा सा॥
सकलनयगभीरा स्यान्मृषा स्याद्वदीति।
नभसि नलिनपत्रे दन्तिनः सञ्चरन्ति॥ ९९॥

एवमेकैकत्र द्वित्राणि पंचषाणि वा पद्यानि कृत्वाऽभ्यसेत्॥

इति शिक्षानुगः सर्वरसभावविशारदः॥
शब्दाद्यशेषसम्प्रीतो महाकविरतोऽपरे॥ १००॥

मध्यमादयः—

केचित्सौशब्द्यमिच्छन्ति केचिदर्थस्य सम्पदम्॥
केचित्समासभूयस्त्वं परे व्यस्तां पदावलीम्॥ १०१॥
मृदुबन्धार्थिनः केचित् स्फुटबन्धैषिणः परे॥
मध्यमाः केचिदन्येषां रुचिरन्यैव लक्ष्यते॥ १०२॥
कवित्वमातनोति यस्त्रिषष्ठिपूरुषश्रितम्॥
त्रिषष्ठिधामंमण्डितं त्रिविष्टपौघमेष्यति॥ १०३॥

इत्यलङ्कारचिन्तामणौ कविशिक्षाप्ररूपणो नाम

प्रथमः परिच्छेदः॥ १॥

---

१ पूजयति॥ २ समस्तपदशून्याम्॥ ३ पटलं॥

## नमः श्रीशान्तिनाथाय ॥

### द्वितीयपरिच्छेदः ॥

अथ तावद्ब्रुवे शब्दालङ्कारं तं चतुर्विधम् ॥
चित्रवक्रोक्त्यनुप्रासयमकाश्रितभेदतः ॥ १ ॥
धीरोष्ठ्यबिन्दुमद्बिन्दुच्युतकादित्वतोऽद्भुतम् ॥
करोति यत्तदत्रोक्तं चित्रं चित्रविधा यथा ॥ २ ॥

तच्च बहुविधम्—

उभे व्यस्तसमस्ते च द्विर्व्यस्तद्विःसमस्तके ॥
उक्तव्यस्तसमस्तं च द्विर्व्यस्तकसमस्तकम् ॥ ३ ॥
द्विःसमस्तकसुव्यस्तमेकालापं प्रभिन्नकम् ॥
भेद्यभेदकमोजस्वि सालंकारं च कौतुकम् ॥ ४ ॥
प्रश्नोत्तरसमं पृष्टप्रश्नमग्नोत्तरं तथा ॥
आदिमध्योत्तराभिख्ये अन्तोत्तरमपन्हुतम् ॥ ५ ॥
विषमं वृत्तनामापि नामाख्यातं च तार्तिकम् ॥
सौत्रं शाब्दिकशास्त्रार्थे वर्णवाक्योत्तरे तथा ॥ ६ ॥
श्लोकवाक्योत्तरं खण्डं पादोत्तरसुचक्रके ॥
पद्मं काकपदं चापि गोमूत्रं सर्वतः[१] शुभम् ॥ ७ ॥
गतप्रत्यागतं चापि वर्धमानाक्षरं तथा ॥
हीयमानाक्षरं चापि श्रृङ्खलं नागपाशकम् ॥ ८ ॥
चित्रं संशुद्धमन्यत्तु सप्रहेलिकमीरितम् ॥
पृथक्पृथक्पदैः पृष्ठं यत्तद्व्यस्तं निगद्यते ॥ ९ ॥
समस्तं मेलनेनात्र पदानां पृष्टमुच्यते ॥
कः[२] पूजावाचकः शब्दः कर्मभूतं विधिं वद ॥ १० ॥
मेदिनीवाचकः शब्दः कः पद्मवदनेऽम्बिके ॥

---

१ सर्वतोभद्रम् ॥ २ पूजार्थं वदतीति द्वितीयाविभक्त्यन्तम् ॥ विधिपर्यायम् ॥

स्वयम्भूः। व्यस्तजातिः॥

कल्याणेषु सुरैः कोऽर्च्यः कमनीयेषु देवि भोः॥
स्मर्तॄणामपि कर्तॄणां मुक्तिसौख्यप्रदो महान्॥ ११॥

तीर्थकरः। समस्तजातिः॥

समासपदभङ्गेन[1] द्विःपृष्टं व्यस्तमेव वा॥
समस्तं यत्तदाख्यातं द्विर्व्यस्तं द्विःसमस्तकम्॥ १२॥
नारायणसुसंबुद्धिः का चन्द्रमसि को वसेत्॥
मुक्तिकान्तापरिष्वक्तः किं पदं कीदृशो भवेत्॥ १३॥

अकलंकः। आकलंकः। अकलं अशरीरपदम्। कः परमात्मा।

द्विर्व्यस्तजातिः॥

जिनमानम्रनाकौकोनायकार्जितसत्क्रमम्॥
कमाहुः करिणं चोद्धलक्षणं कीदृशं विदुः॥ १४॥
सुरवरदम्। सुरेभ्यो वरमभीष्टं ददाति। शोभना रवा रदा यस्य।

द्विःसमस्तजातिः॥

उभयार्थप्रदं पृष्ठं पदं पदविभागतः॥
समुदायेन च प्रोक्तं तद्व्यस्तकसमस्तकम्[2]॥ १५॥
आतपोत्तप्तपान्थानां किं तृष्णां विच्छिनत्ति भोः॥
त्यजन्ति मुनयो धीराः किं किं पापकरं मतम्॥ १६॥

कन्दर्परञ्जनम्। कं गर्वरागद्वयम्। व्यस्तसमस्तजातिः॥

व्यासद्वयसमासाभ्यां द्विर्व्यस्तकसमस्तकम्॥
स्याद्विः समस्तकव्यस्तं द्विःसमासेतरैकतः॥ १७॥
निस्स्वतोषाय को मूर्ध्दभ्रान्तेः का किं शुभं रणे॥
सार्वा[3] का किं कुलं स्तुत्यं किं सदस्तीर्थकारिणाम्॥ १८॥
राजराजविराजितम्। रा वित्तं। जरा। जविभिरश्वैः शोभितम्॥

---

१ विभागेन॥ २ व्यस्तपदद्वयं। समस्तपदमेकम्॥ ३ सर्वेभ्यो हिताः॥

राजराजं चक्रिणम् । विराति विशेषेण अनुगृण्हातीति राजराज-
विरा दिव्यभाषा । अजितं ॥ द्विर्व्यस्तसमस्तजातिः ॥

एकश्रुतिप्रकारेग भिन्नार्थकथकं वचः ॥
द्विःसमस्तप्रभेदेन तदेकालापकं मतम् ॥ १९ ॥
किमाहुः सरलोत्तुंगसच्छायतरुसंकुलम् ॥
कलभाषिणि किं कान्तं तवांगे सालकाननम् ॥ २० ॥

सालवनं ॥ अलकसहितमुखम् ॥

क कीदक्शस्यते रेखा तवाणुभ्रूः सुविभ्रमे ॥
करिणीं च वदान्येन पर्यायेण करेणुका ॥ २१ ॥

एतदप्येकालापकम् ॥

शब्दार्थलिङ्गवाग्भिश्च विभक्त्या यत्समासतः ॥
व्यस्तं विभिन्नमाख्यातं तत्प्रभिन्नं मनीषिभिः ॥ २२ ॥
आमंत्र्यतां महावैरिवृदं शब्दोऽपराधवाक् ॥
कोऽमराणां प्रजायेत तीर्थनाथसमुद्भवे ॥ २३ ॥
महारागः । अरीणां वृन्दमारं ॥ आगः ॥

शब्दार्थलिंगाभिन्नम् ॥

सम्बुद्धिं विप्रकृष्टार्थे कुरु ब्रह्मोच्यते च कः ॥
प्रजानां घातकः को वा भूपतिः परिभाष्यते ॥ २४ ॥

दूराजः ॥ शब्दार्थभिन्नं

कीदृशं नंदनं मेरोस्सप्तम्या मेघवाचकम् ॥
किं पदं सुस्पृहां कस्मै कुर्वते वद कामुकाः ॥ २५ ॥

महासुरतरुचये ॥ शब्दार्थलिंगविभक्तिभिन्नम् ॥

---

१ सम्बोधनं दूरार्थे हे दूर । अजः ब्रह्मा । दुष्टश्चासौ राजा च दूराजः ॥ २ नन्दन-वनपक्षे महान्तः सुरतरवो यस्य तत्। कल्पवृक्षपक्षे सप्तम्यन्तं चये इति ॥ कामुकानां पक्षे महच्च तत् सुरतं च निधुवनं तस्य रुचये प्रीतये ॥

शोभमानं नभः कीदृक् कः स्तापयति देहिनम् ॥
के जिनेशसमुत्पत्तिसमये कृतसम्भ्रमाः ॥ २६ ॥

सुरविभवः[1] ॥ शब्दार्थवचनभिन्नम् ॥

एकेनैवार्थभेदेन रचयन्ति प्रभिन्नकम् ॥
केचिन्मृदुधियस्ते च न.दृतं सूरिभिर्यथा ॥ २७ ॥
कः कम्पयति चेतांसि सर्वेषां वैरिणां भृशम् ॥
सुरासुरनरादीनां कस्तोषयति मानसम् ॥ २८ ॥

वीरोदयः[2] ॥

शब्दार्थभेदतोऽवश्यं प्रभिन्नं सुविरच्यताम् ॥
वचोलिङ्गविभक्तीनां भेदस्तूच्येत शक्तितः ॥ २९ ॥
यत्र प्रश्ने निबध्येते विशेषणविशेष्यके ॥
भेद्यभेदकमाख्यातं तदिदं सूरिभिर्यथा ॥ ३० ॥
केशेषु प्रसितः कामतलैन्यपगमस्पृहः[3] ॥
कः क्लेशमेति कस्तुष्टः प्रासादतलनिष्ठितः ॥ ३१ ॥

कुमर्ज्जनः । कुत्सितस्नानः[4] । भूसहितो राजा । भेद्यभेदकजातिः ।

यत्पृष्टं दीर्घवृत्तेन युताल्पाक्षरमुत्तरम् ॥
तदोजस्वीति भाषन्ते पण्डिताः खण्डितार्तयः ॥ ३२ ॥

तेजः सङ्क्षोभकारि स्फुटतरवनिताऽपाङ्गबाणैर्न विद्धः ।
तद्वाग्ज्वप्रबद्धो मनसि वचसि चाङ्गे तदासङ्गदूरः ॥
को मूढः प्राणिचित्तभ्रमथकरमहाश्वभ्रदुःखप्रदायी ।
कस्माज्जातः सदोषः सकलजनततिप्राणहारी च वेदः ॥ ३३ ॥

---

१ नभःपक्षे शोभनश्चासौ रविश्च सुरविस्तेन शोभनम् । प्राणिपक्षे संसारस्तापयति । जिनोत्पत्तिपक्षे सुराणां विभवो नाथाः देवेन्द्राः । विभव इति उकारान्तम् ॥ २ शत्रुपक्षे वीराणामुदयः शूरोत्पत्तिः ॥ देवानां पक्षे वीरस्योदयः वर्धमानस्वामिन उत्पत्तिः ॥

३ कल्मषहान्यभिलाषः ॥ ४ पुरुषपक्षे कुत्सितं स्नानं यस्य सः कष्टस्नानः । राजपक्षे कुरस्यास्तीति कुमान् कुमाँश्चासौ जनश्च पृथिव्या सहितो राजा ॥

अ॒सुरतः ॥ न विद्यते सुष्टु तदभिलाषमात्रं रतं यस्य सः ॥

शालासुरात् ओजस्विजातिः ॥

यत्रोपमादयो नानाऽलङ्कारास्सन्ति च स्फुटम् ॥
कविभिः कथ्यते तद्धि सालङ्कारसमाह्वयम् ॥ ३४ ॥

प्रियकारिणि का देवि त्वमेव प्रियकारिणी ॥
विवेकिनीव काऽम्ब त्वं सार्वा का त्वमिवाम्बिके ॥ ३५ ॥

सामगीः । सा[२] लक्ष्मीः । अमगीः । अमति जानातीत्यमा सा चासौ गीश्च सरस्वतीति भावः । साम[३]मोक्तिः । उपमा ॥

प्राहुः क्षमारूपमुनीशमूर्ति । कां वीरदिव्यध्वनिशीतभानोः ।
अग्रे कवीनां वचनं किमंहो- । गणं महावीरहरेः कमाहुः ॥ ३६ ॥

कुम्भं ॥ कुं भुवं ।, भं नक्षत्रं ॥ करिपिण्डं ॥ रूपकं ॥ सालङ्कारजातिः ॥

वृत्तेन लघुना पृष्टं प्रचुराक्षरमुत्तरम् ॥
यत्तत्तद्वेदिनः प्राहुः कौतुकं कौतुकावहम् ॥ ३७ ॥

केऽनिलाः श्रीहरेर्लज्जा देहसम्बोधनं कथम् ॥
भक्षणार्थे च कः शब्दः कीदृग्रत्नत्रयं वद ॥ ३८ ॥

कामास्त्रपातनोदनं । काः । अनिलाः ॥ मा श्रीः । भः । विष्णुः । त्रपा । तनो । अदनम् । कौतुकजाति ॥

प्रश्नाक्षरसदृक्षत्वमुत्तरे यत्र गद्यते ॥
प्रश्नोत्तरसमं प्रोक्तं न देवकविकुञ्जरैः ॥ ३९ ॥

शोभा भवति कीदृक्षे स्वे सरस्वति विद्रुमाः ॥

---

१ पुरुषपक्षे सुरतक्रीडारहितः । वेदपक्षे शालासुराज्जातः (?) शंखासुराज्जातः इति बोध्यम् ॥ २ सा च लक्ष्मीर्निगद्यते । एन विष्णुना सहिता सा लक्ष्मीः ॥ ३ प्रियवचः ॥

क सन्तीत्यादिकप्रश्ने विचिन्त्योत्तरमुच्यताम् ॥ ४० ॥

भानि नक्षत्राणि अस्मिन्भवतीत्युत्तरम् ॥ भोः सरस्वति, उत्तरवचनपक्षे (सरस्वति) समुद्रे ॥ प्रश्नोत्तरसमजातिः ॥

उत्तरं यत्र सूच्चार्य प्रश्नस्तस्यानुयुज्यते ॥
पृष्टप्रश्नं समाख्यातं प्रश्नोत्तरविशारदैः ॥ ४१ ॥
श्रीः स्मरो भूर्बुधश्चेति प्रोक्तमुत्तरमत्र तु ॥
प्रत्येकं पृच्छतां चक्रितेजोदग्धाः क काः स्थिताः ॥ ४२ ॥

केकिराजयः । का ई । कः इः । इरा । अजयः । के जले । अरिराजयः । पृष्टप्रश्नजातिः ॥

इदं वदेति सम्प्रोक्ते भंक्त्वा यत्रोत्तरं वदेत् ॥
तद्भग्नोत्तरमाख्यातं काकुवाच्यैव गोपितम् ॥ ४३ ॥
केभ्यो हितकरो भोस्त्वमिवामंत्र्यतां कवे ॥
प्रशस्ताभ्यर्हितत्वाद्यः को भवानिव सज्जनः ॥ ४४ ॥

सज्ज । भोः शब्दशासन । जैत्रे जः प्रतिपत्तव्यः शम्बरे शब्दशासने इत्यभिधानात् । नः अस्मभ्यं कविभ्यः । भग्नोत्तरजातिः ॥

पृष्टं यत्प्रश्नवाक्ये स्यादादिमध्यान्तसुस्थितम् ॥
उत्तरं त्रिविधं तत्स्यादादिमध्यान्तपूर्वकम् ॥ ४५ ॥
मुदितो देवलोकस्य का तीर्थकरजन्मतः ॥
रागान्धीकृतचित्तानां चेतोव्याधिः कुतः सदा ॥ ४६ ॥

मुत् आनन्दः इतः स्मरात् । आद्युत्तरजातिः ॥

वनं पुष्पादिभी रम्यं कुर्यात्को मधुरेण दृक् ॥
अपाङ्गवीक्षितैः कामिजनं तोषयतीह का ॥ ४७ ॥

मधुः मधुमासः । एणदृक् एणाक्षी । मध्योत्तरजातिः ॥

किं किमस्त्रीद्वितीयायां रूपं को भूमिपालकः ॥
कामिनीसङ्गतो नित्यं के तु तुष्यन्ति कामिनः ॥ ४८ ॥

अन्तोत्तरजातिः ॥

सुस्थितं प्रश्नवाक्येऽपि पादान्तरवियोगिनि ॥
कथितापन्हुतं यत्र नोत्तरं तद्विभाषितम् ॥ ४९ ॥
अभ्यते शमिना किं भोः केन मोमुह्यते जगत् ॥
मुक्तिकान्तापरिष्वङ्गे धाम केनाप्यते वद ॥ ५० ॥

शं सुखं । इना कामेन । मिलित्वा व्रतिना ॥

वायुपक्षे हरिक्ष्मासु स्मरे सम्बुद्धयः कवौ ॥
का ब्रूहि विस्रशून्यांग नो भात्यपि विकस्वरे ॥ ५१ ॥

विस्रशून्याङ्ग । भो आमगंधिन् । तनुरहित । पक्षे विकस्वरे । इत्यत्र विस्रं विशब्दसकाररेफमात्रत्रयं त्यजन् । तथाच । कवे इति स्थितं । क । वे । अ । को । ए । कवे (?) । इत्युत्तरं । कथितापन्हुतजातिः ॥

वैषम्यं यत्र बन्धस्य विषमं तन्निरूप्यते ॥
वृत्तनाम भवेत्प्रश्नवृत्तनामोत्तराद्धि यत् ॥ ५२ ॥
विनक्ष्यन्ति जना लोके के नेष्टगुणसञ्चयाः ॥
तदुत्तरसमुद्भूतः शब्दः कः पशुवाचकः ॥ ५३ ॥

सावरागाः । अवसमन्ताद्रञ्जनमवरागः तेन सहिताः । सो ओकारसहिता । अरा रा इति शब्दरहिता । गा इत्यत्र विसर्जनीयःस्थित एव तथा सति गौरिति रूपसिद्धिः ॥ विषमजातिः ॥

सम्बोधनं किं सुरलोकनाथे । भ्रमद्द्विरेफा सुरभिस्फुटा का ॥
का याति नाकाज्जिनपूजनार्थे । वृत्तं किमाक्रूत्युपजातिलक्ष्म ॥ ५४ ॥

इन्द्रमालावृत्तजातिः ॥

सुप्तिङंतप्रभेदेन सुयोगित्वाद्विधोत्तरम् ॥
एकमेव भवेद्यत्र तन्नामाख्यातमुच्यते ॥ ५५ ॥
सेविता विव्हलं कर्तुं का क्षमा सुचिरं घटः ॥
नाम्भो धरति कीदृक्षं शास्त्रं कुरुथ धीधनाः ॥ ५६ ॥

सुरामः । सुरा । आमः । सुरामः दक्षः ।

यामिनीप्रतिमायोगे कीदृशं यतिनां कुलम् ॥

कं वन्दन्ते सुरा नित्यं कामं किमकरोत्सुधीः ॥ ५७ ॥

अभ्यभवं। अभि भयरहितं। अभवं संसारहीनजनं। अभ्यभवं। निराकरोमि स्म॥ एवं सर्वलकारेषु बोद्धव्यम्॥ नामाख्यात जातिः॥

तर्कतः सूत्रतः शब्दादुद्भवं शास्त्रवाक्यतः॥

तार्क्यं सौत्रं च शाब्दं च शास्त्रार्थं चेति तद्भवेत्॥ ५८ ॥

मुनिसम्बोधनं कीदृक्को वर्भूजनतोषकृत्॥

जैनेभ्यो रोचते सर्वकुवादिभ्यो न को वद॥ ५९ ॥

अनेकान्तः। न विद्यते इः कामः यस्यासौ अनिः तस्य सम्बोधनम्॥ तार्क्यजातिः॥

उक्तस्य नुः परामृष्टौ कः शब्दो भेदवाचि किम्॥

अव्ययं केन नाऽतोषि सूत्रं किं प्रक्रियास्थितम्॥ ६० ॥

सहार्थेन। सौत्रजातिः॥

न श्लाघ्यते मुनिः कस्मै सुवन्तं किं निगद्यताम्॥

अकाराद्यनुबन्धानां धातूनां नाम किं वद॥ ६१ ॥

परस्मैपदम्॥ मुनिः परस्मै न श्लाघते स्वगुणाधिकं धर्मं न ज्ञापयति अपितु स्वनिन्दां परप्रशंसां च करोतीत्यर्थः॥ शाब्दीजातिः॥

श्रावेण गमयेत्कालं कया वृक्षः पतत्यधः॥

कः कीदृशः सुधीग्राह्यो धर्मः सारतरो वद॥ ६२ ॥

दयामूलः दयादानेन अमूलः॥

दयामूलो भवेद्धर्मो दया प्राणानुकम्पनम्॥

दयायाः परिरक्षार्थं गुणाः शेषाः प्रकीर्तिताः॥ ६३ ॥

इति शास्त्रोक्तत्वात्। शास्त्रजातिः॥

वर्ण एवोत्तरं वाक्यमेवोत्तरमुदीर्यते॥

वर्णोत्तरं भवेत्तत्तद्वाक्योत्तरमपि स्फुटम्॥ ६४ ॥

लक्ष्मीः का किं जलं विष्णुसम्बुद्धिः कथमुच्यताम्॥

कस्त्यागः कीदृशो देशः प्रावृट्काले वदाऽऽशु मे॥ ६५ ॥

सावारयः । सा । वाः । अ । यः ॥ यस्त्यागे निलये वायौ यमे धातरि पातरि इत्यभिधानात् ॥ आसमन्ताज्जलसहिताः ॥ वर्णोत्तरजातिः ॥

मेरौ लब्धं किमिन्द्राद्यैः स्वामिनाऽङ्केऽस्य का कृता ॥
शक्रेणाव्ययमप्यर्थे किं कृता पुरुणा च का ॥ ६६ ॥

सुदीक्षाऽपि । सुत् सवनं । ईक्षा निरीक्षणं । अपि । सुदीक्षा । आपि प्राप्ता । वाक्योत्तरजातिः ॥

श्लोकार्द्धपादपात्रं तु यत्रोत्तरमुदीर्यते ॥
श्लोकार्द्धपादपूर्वं तदुत्तरं त्रिविधं मतम् ॥ ६७ ॥

का श्रद्धा मूढवृन्दं किमभिविधिमुखेऽर्थे परं किं निषेधे ।
सम्पत्तिर्व्योम का किं गिरिरपि कुलिशं कोपपीडे पदं किम् ॥
युल्लज्जामन्त्रणं किं चरति खगगणः कुत्र चामन्यदावः ॥
कृष्णं ब्रूहि च्युतांशुर्विधुरपि जलदेनोच्यतां कीदृशेन ॥ ६८ ॥

कः पुमान् का च सम्बुध्दिः पदार्थे लेटि किं पदम् ॥
आवहेः को मुनिः कीदृग्दोषमुक्तो जिनेश्वरः ॥ ६९ ॥

रुचिरध्यानसम्पन्न भोगोपद्रवमारण ॥
मन्दाक्षखेदवाञ्छादिनानाभावावहानिकः ॥ ७० ॥

रुचिः । अधि न विद्यते धीर्यस्य तत् । आ । न । सम्पत् । नभः । अगः । अपद्रवम् अनार्द्रम् । आः । रण । मन्दोक्ष । खे । दव । अं । छादिना । ना । भाव । आवह । अनिकः निष्कामः । श्लोकोत्तरजातिः ॥

का शास्त्रेण भवत्यनेकजनताऽऽनन्दी च कः कोकिला- ।
सेव्यं किं कुरुते च निर्गुणगणं किं किं शरत्कालगम् ॥
सम्बोध्येत सुनिर्मलं धरति कः केयूरमत्त्युज्वलं ।
कीदृक्षो वद रत्नदीप इह भोः कीदृक् जिनः प्रोच्यताम् ॥ ७१ ॥

धीरानन्दनमालाति सुखदो रञ्जनातिगः ॥ धीः । राः । नन्दनम् । आलाति । सुख भोः शोभनाकाश । दोः बाहुः ॥ अञ्जनातिगः कज्जलरहितः । खण्डोत्तरजातिः ॥

कस्मादानीयते नीरं कुतस्तृष्णापरिच्युतिः ॥
प्रदाहोऽपि कुतो वीरः कीदृशः किं तपोऽकरोत् ॥ ७२ ॥

प्रहितो वारितो गतः । प्रहितः कूपात् । वारितः जलात् । अगतः पर्वतात् ॥ पादोत्तरजातिः ॥

नयप्रमाणसम्बुद्धिः शमः का श्रीमुखेऽपि सा ॥
किं निषेधेऽव्ययं लोकनाशिनी दुःखि किं कुलम् ॥ ७३ ॥
कः पुमानन्नसम्बुद्धिः का च नश्वरनिस्वने ॥
लेटि किं पदमस्माकमित्यर्थे केन नाश्यते ॥ ७४ ॥
वस्त्वंशो बुध्यते केन वक्षश्चक्रं रमा च का ॥
संवत्सरार्द्धसम्बुद्धिः का कथं जिन ईड्यते ॥ ७५ ॥
नयमानक्षमामाननमामार्यार्तिनाशन ॥
नशनादस्यनो येन नयेनोरोरिमायन ॥ ७६ ॥

नयमान । क्षमा । मानन लक्ष्मीमुख । मा । मारी । आर्ति आर्तध्यानमस्यास्तीति । ना । अशन । नशनाद नश्यतीति नशस्तस्यनाद । स्य षो अन्त कर्मणीति धातोर्मध्यमपुरुषः ॥ नः । येन यमेन । नयेन । उरः । अरि अराणि सन्त्यस्मिन्निति । मा । अयन । कथं जिन ईड्यते इति प्रश्नस्य सर्वश्लोकार्थः ॥ नयमाना पूज्यमाना क्षमा यस्यासौ नयमानक्षमः तस्य सम्बोधनं हे नयमानक्षम । न विद्यते मानं उद्धतिः परिमाणं वा यस्यासौ अमानः तस्य सम्बोधनं हे अमान । न प्रतिषेधवचनम् । मां अस्मदः इबन्तस्य रूपम् (?) । आर्याणां साधूनां आर्तिः पीडा तां नाशयतीत्यार्यार्तिनाशनः कर्तरि युट् बहुलवचनात् ततः हे आर्यार्तिनाशन । नशनात् विनाशनात् जातिजरामरणेभ्य इत्यर्थः ॥ अस्य उत्सारय असू क्षेपणे इत्यस्य धातोर्लोडन्तस्य रूपम् ॥ नो प्रतिषेधे ॥ येन कारणेन पूजां अहं लभे समाननेऽयं विधिः । न नो प्रतिषेधवचने अत्र सम्बान्धिर्नाये । न नो नये । किन्तु नये एव । द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः । न प्रतिषेधे । हे उरो महन् । अरिमाय अरिहिंसक । अरीन् अन्तःशत्रून् मिनाति

हन्तीति अरिमाय ततः हे अरिमाय पूर्वोक्तोऽपि नात्रसम्बन्धनीयः । हे न-नारिमाय । किमुक्तं भवति हे नयमानक्षम । अमान । आर्यार्तिनाशन उरो ननारिमाय मां विनाशात् अस्य अपनय । येन ननो नये अहं पूजां लभे इत्यर्थः ॥

चक्रं त्वालिख्य मध्ये विलिखतु सदृशं वर्णमेकं चतुष्कं ।
तद्वारासु प्रलेख्यं प्रविलिखतु महादिक्षु चत्वारि विद्वान् ॥
मध्ये रूढानि सप्तेतरवरदिग‍रेष्वष्ट रूढानि कुर्यात् ।
कुर्याद्वाह्यासु दिक्षु प्रलिखतु विषमान् वा समान् श्लोकचक्रे ॥ ७७ ॥

चक्रप्रश्नजातिः ॥

सर्वोत्तरादिवर्णैर्यत् कृतकार्णिकमष्टभिः ॥
दलैर्द्विद्व्यक्षरापूर्णैः पद्मं तत्प्रणिगद्यते ॥ ७८ ॥
को दुःखी स्यात् कुराजः को जिनो मोहाय किं व्यधात् ॥
किमलुब्धकुलं कीदृग्मुनिः सिध्दो गुणाः क्व न ॥ ७९ ॥
कुत्रास्ते गुणसन्ततिर्जिनपतिः कीदृक् च यस्तार्किकः ।
कीदृग्धर्मबलादभूद्वराजिनो भारः कुतो नीयते ॥
कीदृक्षा मुनयो वनेऽपि सुगुरावायाति शिष्योऽपि च ।
कीदृक्षो बहुशस्यते बुधवरैः कीदृग्दरिद्रो वद ॥ ८० ॥

अनयोऽकुयदशयः अकके मोहो नष्टोभियोमायः । अनयः अयहीनः । नीतिहीनः । अकुप्यत्कोपं कृतवान् । न विद्यते कुप्यं कौशेयादिर्यस्य तत् अकुप्यं दरिद्रवृंदं तदिवाचरदकुप्यत् ॥ अशयो निद्रा-हीनः । न श्यति न कृशंभवतीति अशं मुक्तिपदं यातीति ॥ अकति कुटिलं चरतीति अकः सचासौ कश्च ब्रह्मा तस्मिन् ॥ कको तौल्यं न यस्यासौ अकको मुनिस्तस्मिन् ॥ अमोहः ॥ अमा अपरिमिता ऊहा युक्तयो यस्य ॥ अनष्टः । पक्षे शकटात् । अभियः । अभियातीति च । अमायः लक्ष्मीपुण्याभ्यां हीनश्च ॥ पद्मप्रश्नजातिः ॥

अरग्वधाश्च के विद्याधरीणां को मनोहरः ॥

शोभमानानघः शांतिर्दुष्कृपः कऽस्तमोहरः ॥ ८१ ॥

राजतरवः राजदमलः राजसदयः। पक्षे राजतो जयार्द्धः। तत्रत्यकोकिलारवः। पक्षे राज्ञां दमं रातीति। राजसमज्ञानं तेन सहिता दया यस्य। राज्ञः चंद्रस्य सतां नक्षत्राणां च अयनमयः उदयः॥

काकस्येव पदं यत्र वर्णव्यावर्तनं भवेत्॥
ऊर्ध्वाधःक्रमतो धीरैस्तत्काकपदमुच्यते ॥ ८२ ॥

प्रथमपंक्तिप्रथमकोष्ठादारभ्य द्वितीयपंक्तिद्वितीयतृतीयौ पुनः प्रथमपंक्तिचतुर्थपंचमौ पुनर्द्वितीयपंक्तिषष्ठं पुनः प्रथमपंक्तिसप्तमाष्टमौ पुनर्द्वितीयपंक्तिनवमदशमौ ततः प्रथमपंक्तावेकादशं द्वितीयपंक्तौ द्वादशत्रयोदशौ प्रथमपंक्तिचतुर्दशपंचदशौ इति पठेत् ॥ पुनर्द्वितीयपंक्तिप्रथमकोष्ठादारभ्य प्रथमपंक्तिद्वितीयतृतीयादिक्रमेण तानि त्रीणि वाक्यानि सन्नयेत् ॥ एतेषां वाक्यानामाद्यवर्णे तत्तत्कोष्ठेषु प्रथगेव स्थितं विद्यात् ॥ काकपदजातिः॥

यत्रैकान्तरितं पाठ्यमूर्ध्वाधःक्रमतोऽक्षरम्॥
तां हि गोमूत्रिकामाह सर्वविद्याविशारदः ॥ ८३ ॥

कस्त्याज्यो मुनिनाऽस्य योगविषयः कः कीदृगामंत्रणं।
निस्वे सन्नररक्षके लिटि पदं मुक्तिः क का पाण्डवे॥
सम्बुद्धिः सदसि प्रभोः सुखकरं का योधृमालाऽश्मनः।
सम्बुद्धिश्च किमृक्षमम्बरचरः कः कासतेऽष्टौ गुणाः ॥ ८४ ॥
कृष्णं ब्रूहि च कुत्सादिवाचि संबोधनं च किम्॥
चन्द्रस्थे नित्यमिन्द्रादौ किं जिनः कथमीड्यते ॥ ८५ ॥
राजीवोपमसत्पाद सन्मते कुरु शासनम्॥

---

१ जिनः कथमीज्यते इत्युक्ते सर्वश्लोकार्थः। राजीवोपमसत्पाद राजीवस्य कमलस्य उपमे सती पादे यस्य तस्य सम्बोधनम्। भोः सन्मते भो वर्धमानस्वामिन्। आजीर्णोपलसत्खेदजन्म आजीर्णे नाशे उपलसती प्रकाशे। खेदश्च जन्मच खेदजन्मनी उपलसती खेदजन्मनी यस्य तस्य सम्बोधनं। अंकुशशातनं अंकुशस्य स्मरस्य शातनं नाशनं शास्त्रं। मे कुरु॥

आजीर्णोपलसत्स्वेदजन्म मेऽङ्कुशशातनम् ॥ ८६ ॥

राः । जीवः । अपम लक्ष्मीहीन ॥ सत्प संतं । पातीति ॥ अद कुरुं कौरवं श्यति निराकरोतीति कुरुश ॥ आजिं रणं ईर्णा गता । सत् । स्वेत् स्वे एतेति ॥ अजन्ममे चन्महीनश्रीयुते ॥ अं । कु । पापकुत्सेषदर्थेषु कु इत्यमरः ॥ शश । अतनं सततगमनं ॥ गोमूत्रिकाजातिः ॥

एकेन वाऽथवा द्वाभ्यामक्षरैः सर्वादिग्गतैः ॥
उत्तरैर्यत्तदाख्यातं सर्वतोभद्रमञ्जसा ॥ ८७ ॥

शम्भुस्मरारौ लिटि किं च रूपं शूरेश्वरामंत्रणमत्र किं भोः ॥
करोति शीघ्रं पलितानि का च द्वीपेऽत्र विद्योतति यत्किमिष्टम् ॥ ८८ ॥
वार्धक्ययुग्वाक् च विहङ्गमः को निस्वप्रतोषीदृगनिष्टकारी ॥
सम्बुध्यतां कश्च सुरोऽपि चक्रधारा च मेषः कथमत्र वाच्यः ॥ ८९ ॥
सम्बुध्यतां ब्रह्म कवाटयुग्मं प्रणूयते कः सकलप्रजाभिः ॥
वाजी च रूपं लिटि किं च लक्ष्मीप्रदायकामंत्रणमत्रार्कि भोः ॥ ९० ।
सम्बुध्यतामङ्गणमुत्तमोक्तिः । का का च पंक्तिर्वनितेड्यते का ॥
रमा च काऽऽमंत्रणमुत्तमेशे । श्रीवर्धमानेऽपि किमत्र वाच्यम् ॥ ९१ ॥

वीरराज । उश्च इश्च वी उः शंभुः । उ तापेऽव्ययमीशाने इति वैजयन्ती । रराज । वीरराज । जरा । रवी । जरारवी जरया विशिष्ट आरवो जरारवः असौ यस्य । विः । राः । रजः । शिरोवाजी शिरोदन्तरजो वाजी रजस्तथे त्याभिधानात् अकारान्तरजशब्दोऽस्ति ॥ अजर । अर । अविः । अज । अरर । अवी । अवनमवः पालनं सोऽस्यास्तीति ॥ जवी । अर । ईर । अ-जिर । वीरा विशिष्टा इरा वाक् ॥ राजी । वरा । ई । वरराज । वीरराज ॥ सर्वतोभद्रजातिः ॥

गतप्रत्यागतं तत्स्यात् प्रतिलोमानुलोमतः ॥
यदुत्तरेण तन्मध्यवर्णलोपादनेकधा ॥ ९२ ॥
धुनिः सञ्चलता नृणां सम्बुध्येत कवीशिना ॥

मुनिः सम्बुध्यतां लोकोत्कृष्टचारित्रमण्डितः ॥ ९३ ॥

क्षोभिरव । वरभिक्षो ॥

का पुरोर्मौनिनो दीप्तिर्नृसुरासुरतोषिणी ॥

पालितं केन षट्खण्डगतं भूचक्रमादितः ॥ ९४ ॥

नाशितेरभा । नाशिता इरा वाक् यस्यासौ नाशितेरः मौनी तस्य भा । अन्यत्र भारतेशिना ॥

कोऽस्ति मध्ये सुनन्दायाः कामिन्या अंग्रिमप्रभोः ॥

सुरासुरनराधीशैः कथं सम्बुध्यते पुरुः ॥ ९५ ॥

तनिमा कृशत्वं । अन्यत्र । भो मानित ॥

कः पतिः सरितां पश्चान्मध्यवर्णविलोपतः ॥

ब्रूहि लोके जितः कीदृक् काऽवनिः काव्यकोविद ॥ ९६ ॥

सागरः । अन्यत्र मध्यवर्णलोपे सारः । रसा ॥

मेरोः कोपरिरम्याऽस्ति मध्यवर्णद्वयच्युतेः ॥

धत्तेऽतिरसिका पद्मं स्त्रीने कीदृग्रते रता ॥ ९७ ॥

नाकावली । नाली । लीना स्त्री रता प्रीता । इने भर्तरि विलीनेव स्थितेति भावः ॥ गतप्रत्यागतजातिः ॥

एकद्वित्र्यादयो वर्णजातयो यत्र वृद्धिगाः ॥

आदौ मध्येऽवसाने वा वर्धमानाक्षरं च तत् ॥ ९८ ॥

आमन्त्रणाभिधायी कः शब्दोऽहेः स्फुटभूषकः ॥

सम्बुध्यतां च को लोके निन्द्यः पण्डितकुञ्जरैः ॥ ९९ ॥

भोगान्धः । भो भोग ॥

का कृष्णवल्लभा लोके सम्बोधय महोत्तमम् ॥

जिनं तत्पूजने योग्यं किं काऽऽनन्देत्सरस्तटे ॥ १०० ॥

सारसावली । सा । सार । सारस । मेलने सारसपक्षिणां पंक्तिः ॥

---

१ क्षुभ सञ्चलने । क्षुभ्यन्ति ते क्षोभिणः तेषां रव ॥ २ वृषभस्य ॥ ३ सा च लक्ष्मीर्निगद्यते ॥ सारसं सरसीरुहमित्यभिधानात्पद्मम् ॥ पुष्कराह्वस्तु सारसः हंसविशेषः ॥

न पूज्य इति कस्त्याज्यो विवेकिभिरिहोच्यताम् ॥
आद्यवर्णद्वयं दत्वा रणयोग्याश्च के वद ॥ १०१ ॥

सप्तयः । यः[1] धाता । आद्यवर्णद्वययोगे तुरगाः ॥

मानसाहारमश्नाति बहुकालमतीत्य कः ॥
मध्ये वर्णद्वयं दत्वा जिनकायश्च कीदृशः ॥ २ ॥

सुकुमारः । सुरः । मध्यवर्णद्वययोगे सुकुमारः कोमलः ॥

किन्ता[2] निन्द्या विहंगेषु पश्चादन्त्याक्षरद्वयम् ॥
दानेन ब्रूहि तिर्यञ्चः किं श्रित्वैष्यन्ति मर्त्यताम् ॥ ३ ॥

काकतालीयम् ॥ काकता वायसता । अन्त्यवर्णद्वययोगे काकतालीयं न्यायं श्रित्वा ॥

माधवस्य प्रिया का स्यादाद्यन्ताक्षरयोः पुनः ॥
योगेन ब्रूहि देवेन्द्राः किमारुह्य चरन्त्यरम् ॥ ४ ॥

विमानं । मा । आद्यन्ताक्षरयोगे विमानं ॥ वर्धमानाक्षरजातिः ॥

हीयन्ते वाऽऽदितो मध्यादन्ताद्या वर्णजातयः ॥
यत्रैकद्वित्रिकाद्यास्तद्धीयमानाक्षरं मतम् ॥ ५ ॥
पाण्डवानामरिः कोऽभूद्वसन्ते पिकढौकितः ॥
कामिचेतोहरः कः का षष्ठी युष्मदि भूमनि ॥ ६ ॥

कौरवदुर्योधनः । रवः । वः ॥

शक्तितुष्टिद्वयं कुर्युः के क्रियन्ते शरासने ॥
के के वक्षसि राजन्ते राज्ञां को निःस्वतुष्टये ॥ ७ ॥

आज्याहाराः घृतमिश्रिताहाराः । राः ॥

गोरेत्य नवमासान् क पुरुदेव्याः स्थितः सुतः ॥
आद्यवर्णद्वयं त्यक्त्वा नीचसम्बोधनं कुरु ॥ ८ ॥

उदरे ॥

---

१ यस्त्यागे नियमे वायौ यमे धातरि पातरि ॥ २ कस्य भावः किन्ता ॥

चकाराष्टसहस्त्री को मुनिवृन्दारको भुवि ॥
मध्यवर्णद्वयं त्यक्त्वा का जायन्ते वदाऽऽगमात् ॥ ९ ॥

विद्यानन्दः । अन्यत्र विदः संविलयः ॥

सुरैः कः पूज्यते भक्त्या मुक्त्वाऽऽद्यन्ताक्षरद्वयम् ॥
ब्रूहि किं कुरुषे रम्यस्त्रीनितम्बेऽतिकामुकः ॥ १० ॥

परमेष्ठी । रमे । हीयमानाक्षरजातिः ॥

यन्मिथोऽक्षरवर्तिन्या रेखयाऽन्तरितः स्फुटम् ॥
तमाहुः शृङ्खलाबन्धं भवशृङ्खलया च्युताः ॥ ११ ॥

सम्बोध्यो घ्राणगम्यो रुचिरयुवतिभिः के परिष्वक्तकायाः ।
सम्बोध्यो राजपथ्यो रिपुनिवहरणे को रते कामिनीभिः ॥
सम्बोध्यः कः कृतो ग्लौकिरणगणनिभः श्लाघ्यते लोकतः कः ।
सर्वान्तर्बाह्यसङ्गव्यपगततनुकं किंसमः स्यान्मुनीशः ॥ १२ ॥

गन्धवाहसमः ॥ गन्ध । धवाः । वाह तुरङ्गम । हस । मया श्रिया सह वर्त्तते समः ॥ पश्चान्मिलित्वोत्तरं । शृंखलाजातिः ॥

के दहन्ति घनमार्तयन्ति के । पूजयन्ति जिनमादराच्च के ॥
आह्वयाशु हरितोषकारिणं । सीरिणं विषमवृत्तमस्ति किम् ॥ १३ ॥

दामावारानाम । दावाः मारा: । मारेण स्मरेणाक्रान्ता । वाना व्यन्तराः । राम । एकान्तरितशृङ्खलाजातिः ॥

नागाकारधरे बन्धे वर्णाः पाठ्याः कृतान्तराः ॥
प्रोक्तवाक्योद्भवं श्रित्वा नागपाशं विदुश्च तत् ॥ १४ ॥
वल्ल्यां सम्बुध्यतां रम्यः कस्तापहरमुच्यताम् ॥
कीदृक् मिथ्यारुचिः पुम्भ्यो वेश्यावीथी च कीदृशी ॥ १५ ॥

पल्लवकं[१]महिता ॥ ऊर्ध्वमुखीः सर्पाकृतीश्चतस्रो लेखा विलिख्य पुनर्मुखपुच्छान्तरे तिर्यग्रेखाषट्कं विलिखेत् । तानीमान्येकविंशतिकोष्ठानि स्युः ॥ ततः

---

१ पल्लव कं अहिता ॥ पल्लवकः विटः महिता पूजिता ॥ पिड्गः पल्लवको विटः इत्यभिधानात् ॥

फणादारभ्य प्रतिपंक्तिपुच्छपर्यंतं पृथक्पृथगिमान्वर्णान्न्यसेत् ॥ प्रथमपंक्ति-प्रथमकोष्ठाक्षरमारभ्य यावदन्तरं चतुरङ्गक्रीडायां गजपदचारक्रमेणैकमिदं वाक्यं वाचयेत् ॥ पुनस्तृतीयपंक्तिप्रथमकोष्ठादारभ्य तथैव वाचयेत् ॥ अथ मध्यमपंक्तिप्रथमकोष्ठमारभ्य प्रथमपंक्तौ द्वितीयपंक्तौ वा त्रिप्रचारक्रमे याव-दन्तरं वाचयेत् ॥ तदिदं त्रेधाविभक्तमपि एकरूपतया त्रिगुणितनागपाशं स्यात् ॥ प्रश्नोत्तरमिदं सप्तवर्णं ॥ अन्यत्तु स्वबुध्द्यनुसारेण न्यूनमधिकं वा वदेत् ॥

संस्कृतप्राकृताद्युक्तिवैचित्र्यं यत्र विद्यते ॥
तच्चित्रमैकवर्ण्यं तु शुद्धं तत्परिभाष्यते ॥ १६ ॥

सुखकरधर्मनिदेशी कः स्यात्सम्बोधयाशु बुध हरिणम् ॥
तित्थयरपूजणत्थं केण सदा जांति अमरिंदा ॥ १७ ॥

विमाणेन वि विशिष्टा मा लक्ष्मीः । अणनमण् दिव्यध्वनिर्यस्यासौ । वि-माण् जिनः । एण । तीर्थकरपूजनार्थं केन सदा यान्ति अमरेंद्रा इत्यस्य विमानेन ॥ संस्कृतप्राकृतजातिः ॥

जह्राति कीदृशी कान्तं वधूः सम्बुध्यतां रिपुः ॥
येनेन्दु कारिवं नाथं कांतेयं संम्बुभुक्षेयिम् ॥ १८ ॥

नीरतारे ॥ रतान्निष्क्रान्ता नीरता अरे संस्कृतकर्णाटजातिः ॥ संस्कृतप्रा-कृतापभ्रंशपैशाचिकभेदाच्चतस्रो भाषास्सन्ति ॥ तदुक्तम्—

संस्कृतं प्राकृतं तस्याऽपभ्रंशो भूतभाषितम् ॥
इति भाषाश्चतस्रोऽपि यान्ति काव्यस्य कायताम् ॥ १९ ॥
संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता ॥
प्राकृतं तज्जतत्तुल्यदेश्यादिकमनेकधा ॥ २० ॥
अपभ्रंशस्तु यच्छुध्दं तत्तद्देशेषु भाषितम् ॥
यद्भूतैरुच्यते किंचित्तद्भैतिकामिति स्मृतम् ॥ २१ ॥

---

१ अस्य संस्कृतं यथा— कथमाहूतवान् नाथः कान्तां वै सम्बुभुक्षितः ॥ अस्य प्रश्नस्य उत्तरं कार्णाटभाषायां 'नीरतारे' इति । तदर्थः जलमानय इति ॥

इत्येतद्भाषाकुशलैश्चित्रमनेकधा कर्तव्यम् ॥ चित्रजातिः ॥

सव्वगुणसीळकळियो सव्वामरपूजियो महाबोहो ॥[1]
सव्वहिदमहुरवक्को केणप्पा हवदि परमप्पा ॥ २२ ॥

रयणत्तयेण[2] ॥ शुद्धप्राकृतम् ॥

वक्षोऽवक्षोजलक्ष्यं वहति जगति कः को विनीतो निषेधे ।
को वर्णः कीदृशं स्याद्बलमिह बलिनां शं कुतः स्यान्मृगाणाम् ॥
कस्तूरी स्यात् क जाता कुलममलकुलं तत्कुतोऽभूद्यदूनां ।
कीदृक्षः स्याद्विधाता प्रथमजिनपतिः कः श्रिये नाऽभिजातः ॥ २३ ॥

ना । अभिजातः । कुलीनः । कुल्यः कुलीनोऽभिजात इत्यभिधानात् ॥ न । अभि । निर्भयं । जातः मातुः कान्तायाः वा । जायाजनन्योर्जा इति वचनात् । बाल्ये मातुः यौवने कान्तायाश्च सुखम् ॥ नाभिजा । नाभौ जन्यते इति नाभिजा ॥ अतः विष्णोः नाभिजातः नाभेर्जातः नाभिपद्मात्मभूर्ब्रह्मेत्युक्तेः नाभिजातः ॥ त्रिव्यस्तद्विःसमस्तजातिः ॥

वर्णः कः स्यात् स्फुटार्थे क च वसति रमा कीदृशः स्याद्दरिद्रः ।
कः शब्दः स्याद्विकल्पे वदति रतिपतिः पुंस्त्रियौ के प्रशस्ये ॥
कोऽत्रान्तःस्थासु मुख्यः क सति शिवसुखं किं कुशीकृत् प्रतीतं ।
तार्क्ष्यः कीदृग्गुहो वाऽऽदिमजिनवरतः को जिनो वै जये यः ॥ २४ ॥

वै अव्ययं स्फुटार्थे च । जये । अयः न या श्रीः यस्य ॥ या स्त्रियां पानमञ्जर्योः शोभालक्ष्म्योश्च निर्मितौ ॥ वा रतिपतिः कामो वदति किमिति पुंस्त्रियौ पुरुषनार्यौ प्रशस्यौ प्रधाने बभूवतुः ॥ इत्युक्तवते कामाय स्तुतिकार उत्तरं ददाति ॥ हे ए । अजये विष्णुकमले अजो[3] विष्णुः या कमला ॥ यः यरलवान्तस्था इति ॥ वैजये ॥ उँ[4] अ ए रुद्रब्रम्हकृष्णाः ॥

---

१ अस्य संस्कृतं यथा— सर्वगुणशीलकलितः सर्वामरपूजितो महाबोधः ॥ सर्वहितमधुरवक्ता केनात्मा भवति परमात्मा ॥ १ ॥ २ रत्नत्रयेण. ३ अजश्च या च अजये । अजा विष्णुहरच्छागाः इत्यमरः ॥ ४ उतापेऽव्ययमीशाने ॥ अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्गणे रणे ॥ एकारस्तेजसि जले रात्रौ हर्म्योदरे हरौ ॥

उश्च अश्च एश्च वै इति सिद्धम् ॥ वायां त्रयाणां जयोऽभिभवनमर्थात्तेषां त्यजनं त्यागस्तस्मिन्सति । अयो लोहं । वैजयेयः वीनां पक्षीणां जयो विजयः विजयस्येयं वैजयी तां ई रमां यातीति वैजयेयः गरुडः ॥ वैजेयेयः[1] विजया पार्वती शिवेत्यभिधानात् । विजया अजितजिनमाता तस्या अपत्यम् ॥ त्रिर्व्यस्तत्रिसमस्तजातिः ॥ इत्यादिविशेषो बहुधा चिन्त्यः ॥

बाह्यान्तरार्थद्वितये हि यत्र । यं कंचिदर्थं स्फुटमानिगद्य ॥
विवक्षितार्थः सुविगोपितोऽसौ । प्रहेलिका सा द्विविधाऽर्थशब्दात् ॥ २५ ॥

नाभेरभिमतो राज्ञस्त्वयि रक्तो न कामुकः ॥
न कुतोऽप्यधरः कान्त्या यः सदोजोधरः स कः ॥ २६ ॥

अधरः । सदोजोधरः । सततं तेजोधरः सामर्थ्याल्लभ्योऽधरः अर्थप्रहेलिका ॥

भोः केतकादिवर्णेन सन्ध्यादिसजुषाऽमुना ॥
शरीरमध्यवर्णेन त्वं सिंहमुपलक्षय ॥ २७ ॥

केतककुन्दनन्द्यावर्तादिवर्णेन ॥ पक्षे केतकशब्दस्यादिवर्णेन के इत्यक्षरेण ॥ सन्ध्यादिसजुषा रागेण सहितः सजुट् । सन्ध्या आदिर्यस्यासौ सन्ध्यादिः सन्ध्यादिरेव सजुट् सन्ध्यादिसजुट् तेन ॥ पक्षे सन्ध्याशब्दादिवर्णं सकारं जुषते सेवते इति सन्ध्यादिसजुट् तेन सकारेणेत्यर्थः ॥ शरीरमध्यप्रदेशगतरक्तवर्णेन । पक्षे शरीरशब्दस्य मध्यवर्ती री इत्यक्षरेण ॥ शब्दप्रहेलिका ॥

श्रीमत्समन्तभद्रार्यजिनसेनादिभाषितम् ॥
लक्ष्यमात्रं लिखामि स्वनामसूचितलक्षणम् ॥ २८ ॥

वटवृक्षः पुरोऽयं ते घनच्छायः स्थितो महान् ॥
इत्युक्तोऽपि न तं घर्मे श्रितः कोऽपि वदाद्भुतम् ॥ २९ ॥

वटवृक्षो न्यग्रोधपादपः । पक्षे वटो भो माणवक ऋक्षः भल्लूकः ॥ घनच्छायो भूयनातपः ॥ पक्षे मेघच्छायः । घर्मे निदाघे । स्पष्टान्धकम्[2] ॥

कः कीदृङ् न नृपैर्दण्ड्यः कः खे भाति कुतोऽम्ब भीः ॥

१ विजयाया अपत्यं वैजयेयो गुहः ॥ २ स्पष्टान्धकमिति प्रहेलिका ।

भीरोः कीदृङ् निवेशस्ते नानागारविराजितः ॥ १३० ॥

नानागाः विविधापराधः । अनागाः ना निर्दोषः पुमान् । रविः । आजितः संग्रामात् । विविधगृहशोभितः ॥ आदिविषमं अन्तरालापकप्रश्नोत्तरम् ॥

त्वत्तनौ काऽम्ब गम्भीरा राज्ञो दोर्लम्ब आ कुतः ॥

कीदृक्किं नु विगाढव्यं त्वं च श्लाघ्या कथं सती ॥ ३१ ॥

नाभिराजानुगाधिकं । नाभिः । आजानु ऊरुपर्वपर्यंतमिति यावत् ॥ गाधिकं गाधः तलस्पर्शप्रदेशः अस्यास्तीति गाधि तच्च तत् कं जलम् । अधिकं नाभिराजानुवर्तिनी चेत् ॥ बहिरालापकमन्तर्विषमं प्रश्नोत्तरम् ॥

त्वमम्ब रेचितं पश्य नाटके सुरसान्वितम् ॥

स्वमम्बरे चितं वैश्यपेटकं सुरसारितम् ॥ ३२ ॥

चितं निचितं । स्वं आत्मीयं । रेचितं वल्गितं । वैश्यपेटकं वेश्यानां सम्बन्धिसमूहं । सुरसारितं देवैः प्रापितम् ॥ गोमूत्रिका अस्या बन्धविन्यासः पूर्ववत् ॥

तवाम्ब किं वसत्यन्तः का नास्त्यविधवे त्वयि ॥

का हन्ति जनमाद्यूनं वदाद्यैर्व्यञ्जनैः पृथक् ॥ ३३ ॥

तुक् । शुक् । रुक् । अन्तः गर्भे । आद्यूनं औदरिकं ॥ पृथगाद्यैर्व्यंजनै भिन्नप्रथमव्यंजनैः ॥

द्वीपं नंदीश्वरं देवा मन्दरागं च सेवितुम् ॥

सुदन्तीन्द्रैः समं यान्ति सुन्दरीभिः समुत्सुकाः ॥ ३४ ॥

बिन्दुमान् ॥ सुदति भोः कान्ते ॥ सुदन्तीन्द्रैरिति साबिन्दुकं पाठ्यं उच्चारणकाले बिन्दुना संयोज्यम् ॥ अभिप्रायकथने त्यजेत् । उच्चारणकाले विद्यमानबिन्दुत्वात् बिन्दुमानित्युक्तम् ॥

असद्भिन्दुभिराभान्ति मुखैरमरवारणाः ॥

घटाघटनया व्योम्नि विचरन्तस्त्रिधा स्रुतः ॥ ३५ ॥

---

१ आगोऽपराधो मन्तुश्चेति अन्तर्लापिका ॥

बिन्दुच्युतकम् ॥ घटानां समूहानां घटना तया । पक्षे घटनया घण्टा-संघटनया ॥ त्रिधास्रुतः । त्रिमदस्राविणः ॥

मकरन्दारुणं तोयं धत्ते त्वत्पुरखातिका ॥
साम्बुजं क्वचिदुद्बिन्दु चलन्मकरदारुणम् ॥ ३६ ॥

बिन्दुमद्बिन्दुच्युतकम् ॥

समजं घातुकं बालं क्षणं नोपेक्षते हरिः
का तुकं स्त्री हिमे वाञ्छेत्समजंघातुकंबलम् ॥ ३७ ॥

मात्राच्युतकप्रश्नोत्तरं ॥ समजं सामजं । घातुकं हिंसकं । का तु कं स्त्री का स्त्री तुकं तु ॥ समजंघातुकं । बलं । समजंघातुकं बालं इति च पदच्छेदः ॥ समाने जंघे यस्याः सा समजंघा ॥ समजं बलमिति द्विस्थाने मात्रालोपः । उच्चारणकाले मात्राच्युतिः ॥ अभिप्रायकथने मेलयेत् । यथा समजमित्यत्र सामजं बलमित्यत्र बालम् ॥

जग्ले कयाऽपि सोत्कण्ठं किमप्याकुलमूर्च्छनम् ॥
विरहेऽङ्गनया कान्तं समागमनिराशया ॥ ३८ ॥

व्यञ्जनच्युतकम् ॥ जग्ले । गानपक्षे लकारे लुप्ते जगे गानंचकार । ग्लै हर्षक्षये इति धातुः ॥ सोत्कण्ठं गद्गदकण्ठं ॥ किमप्याकुलमूर्च्छनं ईषदा-कुलस्वरविश्रामं यथा भवति तथा ॥

कः पञ्जरमध्यास्ते कः परुषनिस्वनः ॥
कः प्रतिष्ठा जीवानां कः पाठ्योऽक्षरच्युतः ॥ ३९ ॥

अक्षरच्युतप्रश्नोत्तरम् ॥

शुकः पंजरमध्यास्ते काकः परुषनिस्वनः ॥
लोकः प्रतिष्ठा जीवानां श्लोकः पाठ्योऽक्षरच्युतः ॥ १४० ॥

प्रतिष्ठा आश्रयः ॥ पूर्वोक्तश्लोकस्थप्रश्नोत्तरमत्र द्रष्टव्यम् ॥

के मधुरारावाः के पुष्पशालिनः ॥
केनोह्यते गन्धः केवलेनाखिलार्थदः ॥ ४१ ॥

द्व्यक्षरच्युतप्रश्नोत्तरम् ॥

केकिनो मधुरारावाः केसराः पुष्पशालिनः ।
केतकेनोद्धृते गन्धः केवलेनालिकामिनाम् ॥ ४२ ॥

केसराः नागकेसराः । केवलेन केवलज्ञानेन ।

का स्वरभेदेषु का रुचिहा रुजा ।
का रमयेत्कान्त का तारनिस्वना ॥ ४३ ॥

तदेव ॥

काकली स्वरभेदेषु कामला रुचिहा रुजा ॥
कामुकी रमयेत्कान्त काहला तारनिस्वना ॥ ४४ ॥
का कला स्वरभेदेषु का मला रुचिहा रुजा ॥
का मुहू रमयेत्कान्त का हला तारनिस्वना ॥ ४५ ॥

एकाक्षरच्युतकमुकेचोत्तरं तद्वत् ॥ अस्य श्लोकस्य प्रश्नेषु तृतीय-तृतीयाक्षराण्यपनीय काकली स्वरभेदेष्विति श्लोकस्योत्तरेषु तृतीयतृतीयाक्षराण्यादाय तत्र मिलिते सत्युत्तरं भवति ॥

का कः श्रयते नित्यं । का किं सुतप्रियम् ॥
काननेदानीं । चत्वरं ॥

एकोत्तराक्षरच्युतपादम् ॥ कानन कुत्सितवदन । चरु रतं पक्षे स्वविशेषः । एतौ व्यन्यर्थौ ॥

कामुकः श्रयते नित्यं कामुकीं सुरतप्रियाम् ॥
काननेऽवेदानीं चतुरक्षरविच्युतम् ॥ ४६ ॥
सम्बुध्यसे कथं देवि किमस्त्यर्थे क्रियापदम् ॥
शोभा च कीदृशि व्योम्नि भवतीदं निगद्यताम् ॥ ४७ ॥

निह्नुतैकालापकम् । अस्त्यर्थे अस्तीत्यर्थो यस्य तत् । भवति इति सम्बोध्ये । भवतीति क्रियापदं । भवति भानि नक्षत्राण्यस्येति तस्मिन् ॥

---

१ प्रथमादिपादेषु एकद्वित्रिचतुरक्षराणि क्रमेण च्युतानि ॥

प्रहेलिकाप्रभृति इदं सर्वं पूर्वपुराणेदिकन्याभिर्मरुदेव्यालस्यपरिहारगोष्ठ्यामुक्तम् ॥

स्नात स्वमलगम्भीरं जिनामितगुणार्णवम् ॥
पूतश्रीमज्जगत्सारं जना यात क्षणाच्छिवम् ॥ ४८ ॥

मुरजबन्धः ॥

पूर्वार्धमूर्ध्वं पंक्तौ तु लिखित्वाऽर्द्धं परं त्वतः ॥
एकान्तरितमूर्ध्वाधो मुरजं निगदेत्कविः ॥ ४९ ॥

पूर्वार्द्धमेकपंक्त्याकारेण व्यवस्थाप्य पश्चार्द्धमेकपंक्त्याकारेण तस्याधः कृत्वा मुरजबन्धो निरूपयितव्यः ॥ प्रथमपंक्तेः प्रथमाक्षरं द्वितीयपंक्तेर्द्वितीयाक्षरेण सह द्वितीयपंक्तेः प्रथममक्षरं प्रथमपंक्तेर्द्वितीयाक्षरेण सह उभयपंक्त्यक्षरेषु संयोज्यमा चरमात् ॥ स्नात इति क्रियापदम् ॥ ष्णा शौचे इति लेडन्तस्य धातोः रूपम् ॥ सुष्ठु न विद्यते मलं यस्य सः स्वमलः । गम्भीरः अगाधः स्वमलश्चासौ गम्भीरश्च स्वमलगम्भीरः तं स्वमलगम्भीरम् ॥ न सिताः असिताः । असिताश्च ते गुणाश्च असितगुणाः जिनस्यामितगुणाः जिनामितगुणा एव अर्णवः समुद्रः । अथवा जिन एवामितगुणार्णवः तम् पूतः पवित्रः । श्रीमान् श्रीयुक्तः । जगतां सारः जगत्सारः । पूतश्च श्रीमांश्च जगत्सारश्च पूतश्रीमज्जगत्सारस्तम् ॥ जनाः लोकाः ॥ यात क्रियापदम् । या प्रापणे इत्यस्य धातोर्लेडन्तस्य प्रयोगः । क्षणात् अचिरात् अचिरेणेत्यर्थः । शिवं शोभनं शिवरूपमित्यर्थः ॥ किमुक्तं भवति- हे जनाः जिनामितगुणार्णवं यात स्नात । अथवा जिनामितगुणार्णवं स्नात तेन क्षणाच्छिवं यात इति । शेषाणि पदानि जिनामितगुणार्णवस्य विशेषणानि ॥

अभिषिक्तः सुरैर्लोकैस्त्रिभिर्भक्तिपरैर्न कैः ॥
वासुपूज्य मयीशेशं त्वं सुपूज्यः कयीदृशः ॥ १५० ॥

---

१ उत्तमपुरुषैकवचनम् ॥ २ अमरेश्वरो वासुरुच्यते । वासुना पूज्यो वासुपूज्यः ॥ अथवा वसुपूज्यो नाम जिनजनकस्तस्य सम्बन्धी पुत्रो वासुपूज्यः । इसरस्वे इत्यण ॥ अथवा व्युत्पत्तिर्न नाम्नि ॥

अनन्तरपादमुरजः ॥ प्रथमद्वितीययोस्तृतीयचतुर्थयोर्द्रष्टव्यं । मयीशेश: मे मम त्वमेव ईशेशः। क ईदृशः॥ युष्मत्सदृशः अन्ये के ॥

क्रमतामक्रमं क्षेमं धीमतामर्च्यमश्रमम् ॥

श्रीमद्विमलमर्चेमं वामकामं नम क्षमम् ॥ १५१ ॥

इष्टपादमुरजबन्धः ॥ क्रमतां व्रजतां। अक्रमं युगपत् क्षेमं कुशलं सुखं। धीमतां बुद्धिमतां। अर्च्य पूज्यं। कर्तरि षष्ठी। अश्रमं श्रमरहितं अक्लेशं। श्रीमांश्चासौ विमलश्च श्रीमद्विमलः॥ अतस्तं श्रीमद्विमलं परमतीर्थकरं त्रयोदशं। अर्च क्रियापदं लेडन्तम्॥ इमं प्रत्यक्षवचनं॥ वामैः प्रदानैः काम्यते इष्यते इति वामकामः। अतस्तं वामकामं नम च। चशब्दोऽनुक्तोऽपि द्रष्टव्यः। क्षमं समर्थं क्रोधादिरहितमित्यर्थः॥ एतदुक्तं भवति-- श्रीमद्विमलं सर्वविशेषणविशिष्टं अर्च नम च। धीमतां क्षेमं क्रमताम्। अक्रमं सर्वेषां प्रणामादेव शान्तिर्भवति। मुरजः॥

तमोऽस्तु ममतातीत ममोत्तममतामृत ॥

ततामितमते तातमतातीतमृतेऽमित ॥ १५२ ॥

गूढतृतीयचतुर्थान्यतराक्षरद्वयविरचितयमकानन्तरपादमुरजबन्धः॥ तमोऽस्तु अज्ञानं निराकरोतु। ममतातीत ममत्वहीन मम मे उत्तममतामृत प्रधानागमामृत। ततामितमते विशालानन्तबोध। तातमत तात इति मत, अतीतमृते हीनमरण। उपमातीत। भो जिन मम तमो निवारयतु भवानित्यर्थः॥

ग्लानं चैनश्च नस्स्येन हानहीन घनं जिन ॥

अनन्तानशन ज्ञानस्थानस्थानतनन्दन ॥ ५३ ॥

निरोष्ठ्यथष्टैकाक्षरान्तरितमुरजबन्धः॥ गोमूत्रिकाषोडशदलपद्मं च ॥ ग्लानं च ग्लानिं च एनश्च पापं च नः अस्माकं स्य विनाशय, हे इन

---

१ विगतो मलो यस्मादसौ विमलः। अथवा विगता मा लक्ष्मीर्येषां ते विमाः तत्त्वज्ञानहीनाः अनाथजीवा इत्यर्थः। तान् लात्यादत्ते अनुगृह्णातीति विमलः। अथवा ध्यानकाले विं परमात्मानं मलति धरतीति विमलः। मलि मल्ल धारणे ॥

स्वामिन् हानहीन क्षयरहित घन निबिड जिनपरमात्मन् अनन्त अमेय अनशन अविनाश निराहार इति वा । ज्ञानस्थानस्थ । केवलज्ञान-धामस्थित, आनतनन्दन प्रणतजनवर्द्धन ॥ इन हानहीन जिन अनन्त अनशन ज्ञानस्थानस्थ आनतनन्दन ग्लानं च एनश्च नः स्य ॥

दिव्यैर्ध्वनिसितच्छत्रचामरैर्दुन्दुभिस्वनैः ॥
दिव्यैर्विनिर्मितस्तोत्रश्रमदर्दुरिभिर्जनैः ॥ ५४ ॥

गुप्तक्रियामुरजः ॥ तृतीयपादे क्रिया गुप्ता । दिव्यैरित्यत्र दिवि आकाशे एैः सुरादिभिः सह श्रीविहारे गतवान् भवान् इत्यर्थः ॥ विनिर्मितस्तो-त्रेषु श्रमः अभ्यासः स एव दर्दुरो वाद्यविशेषः एषां तैः । अथवा मुरज एव प्रकारान्तरेण तद्रचना यथा– चतुरः पादानधोऽधो व्यवस्थाप्य प्रथमपादस्य प्रथमाक्षरं तृतीयपादस्य द्वितीयाक्षरेण सह तृतीयपादस्य प्रथमा-क्षरं प्रथमपादस्य द्वितीयाक्षरेण सह गृहीत्वा एवं नेतव्यं यावत्परिसमाप्तिः । पुनर्द्वितीयपादस्य प्रथमाक्षरं चतुर्थपादस्य द्वितीयाक्षरेण सह चतुर्थपादस्य प्रथमाक्षरेण सह द्वितीयपादस्य द्वितीयाक्षरं गृहीत्वा पुनरनेन तावन्नेतव्यं यावत्परिसमाप्तिर्भवति, ततो मुरजबन्धः स्यात् ॥

धिया ये श्रितयेतार्त्या यानुपायान्वरानतः ॥
येऽपापा यातपारा ये श्रियाऽऽयातानतन्वत ॥ ५५ ॥

अर्धभ्रमः गूढपश्चार्द्धश्च ॥ कोऽस्यार्थः– चतुरः पादानधोऽधो विन्यस्य चतुर्णां पादानां चत्वारि प्रथमाक्षराणि तेषामपि चत्वार्य्यन्त्याक्षराणि गृही-त्वा प्रथमपादो भवति । तेषां द्वितीयाक्षराणि चत्वार्यन्त्यसमीपाक्षराणि चत्वारि गृहीत्वा द्वितीयपादो भवति एवं चत्वारोऽपि पादाः साध्याः । अनेन न्यायेन अर्धभ्रमो भवति ॥ प्रथमार्द्धे यान्यक्षराणि तेषु पश्चिमार्द्धाक्षराणि सर्वाणि विशन्ति । एकस्मिन्नपि समानाक्षरे बहूनामपि समानाक्षराणां प्रवेशो भवति । अतो गूढपश्चार्द्धोऽप्ययं भवति ॥ धिया बुध्या, ये यदोरूपं, श्रितया आश्रितया सेव्यया इत्यर्थः । इता विनष्टा आर्तिः मनःपीडा यस्याः सेयमितार्तिः तया । यान् यदः शसन्तप्रयोगः ।

उपयान् उपपूर्वस्य अय गतौ इत्यस्याजन्तस्य रूपं उपगम्यानित्यर्थः । धराः प्रधानभूताः इन्द्रादयः नताः प्रणताः ये च वक्ष्यमाणेन च शब्देन सम्बन्धः । न विद्यते पापं एषां ते अपापाः शुध्दाः कर्मरहिता इत्यर्थः । यातं पारं यैस्ते यातपाराः अधिगतसर्वपदार्था इत्यर्थः । ये च श्रीर्लक्ष्मीस्तया आयातान् आगतान् अतन्वत तनु विस्तारे इत्यस्य धातोः लङन्तस्य रूपम् । यथा द्रव्येण राजान आश्रितान् विस्तारयन्ति ॥ उत्तरसूत्रे क्रियापदं तिष्ठति तेन सह सम्बन्धः ॥

आसते सततं ये च सति पुर्वक्षयालये ॥
ते पुण्यधा रतायातं सर्वदा माऽभिरक्षत ॥ ५६ ॥

अर्धभ्रमः ॥ सति शोभने पुरौ महति अक्षयस्थाने । रतायातं भक्त्या समागतं । मा मां अस्मदो रूपं ॥

चारुश्रीशुभदौ नौमि रुचा वृद्धौ प्रपावनौ ॥
श्रीवृद्धौतशिवौ पादौ शुद्धौ तव शशिप्रभ ॥ ५७ ॥

अर्धभ्रमगूढद्वितीयपादः श्लोकः ॥

हरतीज्याऽऽहिता तान्ति रक्षार्थाऽऽयस्य नेदिता ॥
तीर्थादे श्रेयसे नेताऽज्यायः श्रेयस्ययस्य हि ॥ ५८ ॥

अर्धभ्रमनिरोष्ठ्यगूढचतुर्थः ॥ हरति विनाशयति, इज्या पूजा, आहिता कृता तान्ति खेदं, क्लेशं दुःखं, रक्षार्था पालनार्था, । आयस्य प्रयस्य यत्नं कृत्वा, नेदिता समीपीकृता । अन्तिकस्य णिचि कृते नेदादेशस्य रूपमेतत् ॥ शीतल[2]तीर्थविच्छेदे उत्पन्नो यतस्ततस्तीर्थादिः सञ्जातः

---

१ श्रीश्च शुभं च श्रीशुभे चारुणी च ते श्रीशुभे च चारुश्रीशुभे ते ददत इति । रुचा दीप्त्या वृद्धौ महान्तौ ॥ श्रियं कृणुत इति श्रीकृतौ श्रीकृतौ च तौ धौतौ च शिवौ च तथोक्तौ

२ स्याद्वादप्रवचनस्य प्रथमपुरुषमारभ्य शीतलतीर्थकरपर्यन्तं धर्मोपदेशस्याविच्छित्तिः । पुनः शीतलश्रेयांसतीर्थकरयोरन्तराले धर्मविच्छित्तौ सत्यां प्रथिमानुत्पन्न इत्यर्थः ॥

तस्य सम्बोधनं हे तीर्थादे । श्रेयसे नेता नायकः अज्यायः वृद्ध-त्वहीनः । श्रेयासि एकादशतीर्थकरे त्वयि अयस्य पुण्यस्य । हि यस्मात् । एतदुक्तं भवति– हे तीर्थादे अज्यायः त्वयि श्रेयासि आहिता इज्या रक्षार्था मयस्य पुण्यस्यान्तिका श्रेयोऽर्था ॥ इह लौकिकार्थः तान्ति दुःखं हरति यतस्ततस्त्वं नेता नायक एव नान्यः ॥

ततोतिता तु तेऽतीतः तोतृतोतीतितोतृतः ॥
ततोऽतातिततो तोते ततता ते ततोततः ॥ ५९ ॥

प्रथमपादोद्धृतपश्चार्द्धैकाक्षरविरचितः श्लोकः ॥ प्रथमपादे यान्यक्षराणि तानि सर्वाणि पश्चिमार्धे यत्रतत्र व्यवस्थितानि नान्यानि सन्ति ॥ तता विस्तीर्णा, ऊतिः रक्षा, तता चासावूतिश्च ततोतिः तस्या भावः ततोतिता । तु विशेषे अतिपूजायां वर्तमानो भवति, तस्य केवलस्यापि प्रयोगः । किमुक्तं भवति– विशिष्टपूजितप्रतिपालनत्वं ते तव युष्मदः प्रयोगः । इतः इदमः प्रयोगः एभ्य इत्यर्थः । केभ्यः? ॥ तोतृतोतीति-तोतृतः तस्य विवरणं तोतृता ज्ञातृता । कुतः ? तु गतौ सौत्रिकोऽयं धातुः सर्वे गत्यर्था ज्ञानार्थे वर्तन्त इति ॥ ऊतिः रक्षा वृद्धिर्वा । अव रक्षण इत्यस्यः धातोः क्त्यन्तस्य प्रयोगः । तोतृताया ऊतिः तोतृतोतिः । इतिः अवगमः प्राप्तिर्वा इण् गतावित्यस्य धातोः क्त्यन्तस्य रूपं, तोतृतोतेः इतिः तोतृतोतीतिः ज्ञातृत्ववृद्धिप्रापणमित्यर्थः । अथवा रक्षण-विज्ञानमिति वा अथवा ज्ञातृत्वरक्षणविज्ञानमिति वा ॥ तुदन्तीति तोतृणि, तुद प्रेरणे इत्यस्य धातोः प्रयोगः । तोतृतोतीतेः तोतृणि तोतृतोतीतितोतृणि ज्ञानावरणादीनीत्यर्थः । तेभ्यः तोतृतोतीतितोतृतः ॥ ततः तस्मात् । तातिः परिग्रहः परायत्तत्वं, दृश्यते चायं लोके प्रयोगः युष्मत्तात्या वयं वसामः युष्मत्परिग्रहेणेत्यर्थः । न तातिः अतातिः, अतात्या तता विस्तीर्णाः अतातितताः, अपरिग्रहेण महान्तो जाता इत्यर्थः । अता-तिततेषु उता बद्धा ऊतिः रक्षा यस्यः सः अतातिततोतोतिः, तस्य सम्बोधनं अतातिततोतोते । ततता विशालता प्रभुना त्रिलोकेशत्व-

मित्यर्थः। ते तत्र ततं विशालं विस्तीर्णं उतं बन्धः ज्ञानावरणादीनां संश्लेषः। ततं च तदुतं च ततोतं, तत् तस्यतीति ततोतताः तस्य सम्बोधनं हे ततोततः॥

येयायायाययेयाय नानानूनाननानन॥
ममाममाममामामितातततीतिततीतितः॥ ६० ॥

एकाक्षरविरचितैकपादश्लोकः॥ येयः प्राप्यः अयः पुण्यं यैस्ते येयायाः। अयः प्राप्तः अयः सुखं येषां ते अयायाः येयायाश्च अयायाश्च येयाया याया:। येयायायायैः येयः प्राप्यः अयः मार्गो यस्यासौ येयायाया ययेयायः तस्य सम्बोधनं हे येयायायाययेयाय॥ नाना अनेकं अनूनं संपूर्णं, नाना च अनूनं च नानानूने। आननं मुखकमलं, अननं केवलज्ञानं आननं च अननं च आननानने। नानानूने आननानने यस्यासौ नानानूनाननाननः तस्य सम्बोधनं हे नानानूनाननानन॥ मम अस्मदः प्रयोगः। ममः मोहः दृश्यते लोके प्रयोगः। कामः क्रोधो ममत्वमिति। न विद्यते ममो यस्यासौ अममः। तस्य सम्बोधनं हे अमम॥ अमो व्याधिः तं। आम, क्रियापदं अम रोगे इत्यस्य रूपं। अमं आम विनाशय॥ न मिता अमिता अपरिमिता, आततिः महत्वं, । अमिता आततिर्यासां ताः अमिताततयः, ईतयः व्याधयः, अमिताततयश्च ताः ईतयश्च अमिताततीतयः, तासां ततिः संहतिः अमिताततीतिततिः, इतिः दमनं प्रसरः, अमिताततीतिततेः इतिः अमिताततीतिततीतिः, तां तस्यतीति अमिताततीतिततीतिताः तस्य संबोधनं हे अमिताततीतिततीतितः॥ किमुक्तं भवति हे एवंगुणविशिष्ट मम अमं रोगं आम विनाशय॥

मानोनानामनूनानां मुनीनां मानिनामिनम्॥
मनूनामनुनौमीमं नेमिनामानमानमन्॥ ६१ ॥

द्व्यक्षरम्॥ मानोनानां गर्वहीनानां अनूनानां गुणसम्पूर्णानां। मानिनां पूजावतां। मनूनां ज्ञानिनां॥

भासते विभुतास्तोना ना स्तोता भुवि ते सभाः॥

याः श्रिताः स्तुतगीत्यानुनुत्या गीतस्तुताः श्रिया ॥ ६२ ॥

गतप्रत्यागतार्द्धः ॥ वर्णाः क्रमेण पठ्यन्ते पंक्त्याकारेण ये पुनः ॥ त एव वैपरीत्येन गतप्रत्यागतः स च ॥ विभुतया स्वामित्वेन अस्ताः क्षिप्ताः ऊनाः न्यूनाः याभिस्ताः । ना पुरुषः स्तोता सभाः समवसृतीः ॥ यःस्तौति स भासते ॥

नलपाल महाराज गीत्या नुत ममाक्षर ॥
रक्ष मामतनुत्यागी जराहा मलपातन ॥ ६३ ॥

गतप्रत्यागतैकश्लोकः ॥ मम गीत्या नुत अतनुत्यागी अनल्पदाता । जराहा वृद्धत्वहीनः ॥ मलपातन पापनाशक ॥

वन्देचारुरुचां देव भो वियततया विभो ॥
त्वामजेय यजे मत्वा तमितान्तं ततामित ॥ ६४ ॥

गतप्रत्यागतपादयमकश्लोकः ॥ चारुरुचां शोभनदीप्तीनां नाथ । तमितः नष्टः अन्तः क्षयः यस्य तम् । ततं उक्तं अमितं अमेयं वस्तु येनासौ । मत्वा विचार्य । वियाततया धृष्टत्वेन । वन्दे यजे च त्वामित्यर्थः ॥

पारावाररवारापारा क्षमाक्ष क्षमाक्षरा ॥
वामानामममनामावारक्ष मर्द्दर्द्द मक्षर ॥ ६५ ॥

बहुक्रियापदद्वितीयपादमध्ययमकाऽतालव्यव्यञ्जनावर्णस्वरगूढद्वितीयपादसर्वतोभद्रः ॥ गतप्रत्यागतार्द्धभ्रम इत्यष्टधा ॥ बहुक्रियापदानि कानि ? अम । अव । आरक्ष । अथ द्वितीयपादे क्षमाक्षर इत्यावर्तितं । सर्वाणि अतालव्यव्यञ्जनानि । अवर्णस्वराः सर्वे नान्यः स्वरः । द्वितीयपादे यान्यक्षराणि तान्यन्येषु त्रिषु पादेषु सन्तीति यतः ततो गूढद्वितीयपादः । सर्वैः प्रकारैः पाठः समान इति सर्वतोभद्रः ॥ पारावारस्य समुद्रस्य रवो ध्वनिः पारावाररवः पारावाररवं स्पर्द्धते मन्यतीति पारावाररवारः तस्य सम्बोधनं हे पारावाररवार समुद्रध्वनिसदृशवाणीक ॥ न विद्यते पारं अवसानं यस्याः असावपारा अलब्धपर्यन्ता ॥ क्ष्मां पृथ्वीं अश्नोति प्राप्नोतीति क्ष्माक्षः ज्ञानव्याप्तसर्वलोकः तस्य सम्बोधनं हे क्षमाक्ष ।

क्षमा सहिष्णुता सामर्थ्यं वा। अक्षरा अविनश्वरा। वामानां पापानां अमन खनक। अम प्रीणय। अव शोभस्व। आरक्ष पालय। मा अस्मदः इबन्तस्य रूपं (?) हे ऋद्ध वृद्ध। ऋद्धं वृद्धं। न क्षरतीत्यक्षरः तस्य सम्बोधनं हे अक्षर॥ समुदायार्थः—हे जिननाथ पारावाररवार क्षमाक्ष वामानाममन ऋद्ध अक्षर ते क्षमा अक्षरा अपारा, यतः, ततः मा ऋद्धं अम अव आरक्ष॥ अतिभाक्तिकस्य वचनमेतत्॥

वर्णभार्यातिनन्द्याववन्द्यानन्त सदारव॥
वरदातिनतार्याव वर्यातान्तसभार्णव॥ ६४॥

गूढस्वेष्टपादचकः श्लोकः॥ य आत्मन इष्टः पादः सोऽन्येषु पादेषु गुप्यते यतः। वर्णेन शरीरप्रभया भाति शोभते इति वर्णभः शरीरकान्त्युत्कृष्ट इत्यर्थः। तस्य सम्बोधनं हे वर्णभ। आर्य पूज्य। अतिनन्द्य सुष्ठु समृद्ध। अव रक्ष। लेडन्तस्य रूपं क्रियापदम्॥ वन्द्य देवासुरैरभिवन्द्य हे अनन्त चतुर्दशतीर्थंकर॥ सन् शोभनः आरवः वाणी सर्वभाषात्मिका यस्यासौ सदारवः तस्य सम्बोधनं हे सदारव। वरद इष्टद। अति शोभनं नताः प्रणताः अतिनताः अतिनताश्च ते आर्याश्च अतिनतार्याः। तान् अवति रक्षतीति अतिनतार्यावः तस्य सम्बोधनं अतिनतार्याव। वर्य प्रधान सभा एव अर्णवः समुद्रः अतान्तः अभिन्नः अक्षुभितः सभार्णवः समवसृतिसमुद्रः यस्यासौ अतान्तसभार्णवः तस्य सम्बोधनं हे अन्तान्तसभार्णव॥ किमुक्तं भवति— हे अनन्त वर्णभादिविशेषणविशिष्ट अव पालय मामिति सम्बन्धः। अन्यांश्च पालय। एतत्सर्वं जिनशतके प्रोक्तम्॥

नायकं नौमि तत्त्वज्ञः श्रेयांसं पृतनां तनाम्॥
नाऽननानातनानात जयत्यार्घी ततनावित॥ ६५॥

दर्पणबन्धः॥

षड्वारं पादमध्ये च सन्धौ च भ्रामयेत्कविः॥
तथैकं तस्य मध्ये च दर्पणाह्वयबन्धके॥

ततां विस्तृतां। ना पुमान्। आततं आगमनं, अनाततं अगमनं, तेन गमना-

गमनरूपभवभ्रमणेन नातति न भ्रमति इति अतनान्नातनानातः तस्य सम्बो-
धनम् ॥ तनावित तनौ इत लीन ।. सामर्थ्यात्समवसरणशरीरास्थित । यतः
आर्षीं पृतनां कर्मसेनां त्वत्तो ना जयति इति तत् नौमीतिसम्बन्धः ॥

पादत्रितयमूर्ध्वाधः क्रमादालिख्य चान्तिमम् ॥
पादं कोणचतुष्के तु लीनं कुर्वीत पट्टके ॥ ६६ ॥
धीशं कान्ताभयं देवं यस्यानन्तं च नत्वहम् ॥
मीनाक्ष्येमि जिताबद्धं कान्ताऽधीताकधीकता ॥ ६७ ॥

यस्य मीनाक्षी अधीता कलाकुशला । के परमात्मनि धीर्यस्याः तस्याः
भावः कधीकता, न कधीकता यस्यास्सा अकधीकता परमात्मभावनार-
हिता कान्ता नास्ति तं एमि आश्रयामि ॥

चतुष्कबन्धसन्धौ तु भ्रामयेदाद्यवृन्तयोः ॥
द्वे चैकं वृन्तमध्ये वा तालवृन्तप्रबन्धके ॥ ६८ ॥
जिन त्वयि जना भान्ति सदा सति नुतिप्रियाः ॥
शीलजालमताः सर्वेऽतो नः पाहि सदाऽमल ॥ ६९ ॥

सति प्रशस्ते त्वयि ॥

प्रतियन्त्रं चतुष्कं द्वे द्वे चोर्ध्वाधोऽन्तरे तथा ॥
मध्येऽप्येकं लिखित्वैवं निःसालं बन्धमुन्नयेत् ॥ १७० ॥

महानन्द दयादान नतराज जरान्तक ॥
जनानन्द दमाधार रक्ष माममभाक्षकम् ॥ ७१ ॥

अमं भक्तिमन्तम् ॥ आक्षकं ते स्तुतौ व्यापकम् ॥

भ्राम्यन्तां त्रीणि च त्रीणि दलेष्वष्टसु कर्णिकाम् ॥
एकेनैवाष्टकृत्वोऽपि पूरयेद्ब्रह्मदीपिके ॥ ७२ ॥
विजित्याननमम्भोजं निन्ये जननवैरिणः ॥
कक्ष माननैयागम्यं सुपार्श्वं नमसीमिं तम् ॥ ७३ ॥

---

१ प्रमाणनयाभ्यामगम्यम् ॥

जन्मनः शत्रुभूतस्य यस्याननं स्वशोभया पद्मं जित्वा वनं निनाय तमिति सम्बन्धः ॥

एकसन्धौ तु षडरमेकमेकं द्विगनयेत् ॥
शृङ्गे शिरसि च ग्रीवां त्रियुक्तां परशौ पठेत् ॥ ७३ ॥
सोऽव्याच्छान्तिर्जितैना नो नोनोना गगनाङ्गनाम् ॥
नातमा नाऽऽतमां तथ्यां सभां नत्वाऽन्तमातनाम् ॥ ७४ ॥

गगनांगनां गगनस्यांगनं अंगणं यस्यास्ताम्। आतमां प्राप्तलक्ष्मीं अन्तो धर्मो मा लक्ष्मीर्येषां ते अन्तमाः मुनयः तेषामातमानां। विशालां यस्य सभां। नातमाना ॥ ना ना पुमान् पुमान् वीप्सायां सर्वः पुरुषः। नत्वा अतमाः अज्ञानरहितो भवेत्। यश्च पुनः नोनो ना ना पुमान् ऊनो न किं तु सर्वोऽपि जनो लक्ष्मीसमेतो भवति। जितैनाः जितं एनः पापं येनासौ। स शान्तिर्जिनः नः अस्मानव्यात् ॥

शृंगाग्रद्व्यूर्ध्वभागेषु चतुरश्चतुरो लिखेत् ॥
प्रवेशे निर्गमे चापि यानबन्धे प्रियावहे ॥ ७६ ॥
घनसारातिरस्कारी कायगन्धः सुधीरधीः ॥
धीरधीसुनुतोऽव्यान्नः सोऽजितः सुरसानघः ॥ ७७ ॥

अत्याकृत्यमलो वरो भवयमः कुर्वन्मतिं तापसे।
तत्त्वाचिन्त्यमतीशिता तवसितः स्तुत्यारुवाणिः पुनः ॥
जिष्णूतस्फुटकीर्तिवारवशमः श्रेयोऽभिधे मण्डने ॥
धीर स्थापय मां पुरा गुरुवर त्वं बर्द्धमानोरुधीः ॥ ७८ ॥

षडरं चक्रमालिख्यारमध्ये स्थापयेत्कविः ॥
तान्पादान्नेमिमध्ये तु चतुर्थं चक्रवृत्तके ॥ ७९ ॥

अतिशयिताकारोऽनघो भवान्तकः। तपस्विनि धियं कुर्वन् तत्त्वेऽचाचिन्त्यधियां मुनीनामीशो जिष्णुनेन्द्रेण ऊतं पालितं विशदं यशोजलं यस्य सः ॥ अव समन्तात् शमो यस्य सः। त्वं मुक्त्यलंकारे मां स्थापय।

१ गुणः शोभनः। अनघः निष्पाप. ॥

अत्र एकाद्यंकक्रमेण पठिते सति अजितसेनेन कृतचिन्तामणिः भरतयश-सीति गम्यते ॥ एवं प्रकारान्तरेण किंचित् किंचिद्विशेषविशिष्टं बहुधा चक्रवृन्तं ज्ञेयम् ॥

द्वे द्वे पादे च कण्ठे च गर्भेऽष्टौ विलिखेत्कविः ॥
पार्श्वयोरन्त्यपादं तु लिखेत् भृंगारबन्धके ॥ १८० ॥

भासते हंसविद्योततद्योगतेजसा सभा ॥
साऽज ते गवि संहन्तैनोऽस्तो मल्लिरवैनसाम् ॥ ८१ ॥

हंसकान्तिवच्छोभमान प्रसिद्धध्यानजनितवाक्यदीप्त्या । अज अनुत्पद्यमान। गवि भुवि । एनसां पापानां । संहन्ता विनाशकः ॥

आदिः पादो द्वितीयो वा तृतीयो वा चतुर्थकः ॥
निगुह्यते चतुर्भेदे निगूढब्रह्मदीपिके ॥ ८२ ॥

भूमिपामरतुष्टचङ्गमाश्रितो मुदितोऽनिशम् ॥
असुभृत्तीव्रपीडातः पातु मां मुनिसुव्रतः ॥ ८३ ॥

गूढदीपिका ॥

शीतलं विदितार्थौघं शीतीभूतं स्तुमोऽनघं ॥
सुविदां वरमानन्दसूदितानंगदुर्मदम् ॥ ८४ ॥

छत्रबन्धः ॥ यच्चात्र लक्षणं नोक्तं तस्यनीरोष्ठ्याबिन्दुमदित्यादिना प्रोक्तचि-त्रसामान्यलक्षणमेव बोद्धव्यम् ॥ विशेषलक्षणं तु यत्रास्ति तत्रावगम्यताम्॥

चन्द्रातपं च सततप्रभपूतलाभ- ।
भद्रं दयासुखदमङ्गलधामजालम् ॥
वन्दामहे वरमनन्तजयानयाजं ।
त्वां वीरदेव सुरसंचयशासशास्त्रम् ॥ ८५ ॥

अस्य विवरणं चान्द्री चन्द्रातपोऽपि च भवतापहृतौ कौमुदीसदृशं । अनन्तं संसारं जयतीति अनन्तसंसारजयः । आ समन्तात् नयति मोक्ष-

१ अनागामिन मूदितः अनगदुर्मदो यन ।

मार्गं वर्त्तीत्यानयः ॥ हारबन्धः ॥

भावे मूढत्वयादज्ञेन लोकेन स्तूयसे सदा ॥
न स्तूयसे महाशास्त्रविदा गम्भीरया गिरा ॥ ८६ ॥

संबोधनगोपितं । भवस्येश्वरस्य अपत्यं भाविः षण्मुखः तस्य सम्बोधनं भावे ॥

इत्यलंकारचिन्तामणौ चित्रालंकारप्रकरणो नाम द्वितीयः परिच्छेदः ॥

---

## नमः सिद्धेभ्यः ॥

॥ अथ तृतीयपरिच्छेदः ॥

शब्दार्थभङ्गतो यत्र प्रस्तुतादपरं वदेत ॥
वक्राभिप्रायतो वाच्यं वक्रोक्तिरिति सोदिता ॥ १ ॥

कान्ते पश्य मुदालिमम्बुजदले नाथात्र सेतुः कथं ।
तिष्ठेत्तन्न च तन्वि वच्मि मधुपं किं मद्यपायी वसेत् ॥
मुग्धे मा कुरु तन्मतिं घनकुचे तत्र द्विरेफं ब्रुवे ॥
किं लोकोत्तरवृत्तितोऽधम इह प्राणेश्वराऽऽस्ते वद ॥ २ ॥

अतिदूरपरित्यागात्तुल्या वृत्ताक्षरश्रुतिः ॥
या सोऽनुप्रास इत्युक्तः कोविदानन्दकृद्यथा ॥ ३ ॥

सनयो विनयोपेतः प्रीतः सक्रमविक्रमः ॥
वीरो धीरोऽज्वरोऽनिन्द्यो वन्द्यो रक्षतु नोऽक्षरः ॥ ४ ॥

अनुप्रासः स बोद्धव्यो द्विधा लाटादिभेदतः ॥
लाटानां तत्पदः प्रोक्तश्छेकानां सोऽप्यतत्पदः ॥ ५ ॥

लाटानाम्—

यदि नास्ति स्वतः शोभा भूषणैः किं प्रयोजनम् ॥
यद्यस्त्यंगगता शोभा भूषणैः किं प्रयोजनम् ॥ ६ ॥

छेकानाम्—

रमणी रमणीयाऽसौ मरुदेवी मरुन्मता ॥
नाभिराजं महानाभिममूमुददनेकशः ॥ ७ ॥

केचिदेवमिच्छन्ति--

व्यञ्जनद्वन्द्वयोर्यत्र द्वयोरव्यवधानयोः ॥
पुनरावर्तनं सोऽयं छेकानुप्रास उच्यते ॥ ८ ॥
सुरासुरानुबन्धांघ्रिर्जितार्जिततमोद्युतिः ॥
घनाघनाभवाक्यो मे मनो मनसि चोदतु ॥ ९ ॥
व्यञ्जनानां भवेदेकद्वित्र्यादीनां तु यत्र च ॥
पुनरुक्तिरयं वृत्त्यनुप्रासो भणितो यथा ॥ १० ॥
ललनां कोकिलालापां सुभद्रां विद्रुमाधराम् ॥
भरतः सुरतोद्योगी वीक्षते स्म स्मरातुरः ॥ ११ ॥

स्वरव्यञ्जनयोर्नियमेन पुनरावृत्तिर्यमके । अनुप्रासे तु व्यञ्जनपुनरुक्तिर्नियमेन ।
स्वरपुनरुक्तिरनियमेन ॥ अतश्च अर्थभेदनियमानियमाभ्यां च तयोर्भेदः ॥
इत्यनुप्रासः ॥

श्लोकपादपदावृत्तिर्वर्णावृत्तिर्युताऽयुता ॥
भिन्नवाच्यादिमध्यान्तविषया यमकं हि तत् ॥ १२ ॥
स्वयं शमयितुं नाशं विदित्वा सन्नतस्तु ते ॥
चिराय भवतेऽपीड्यमहोरुगुरवेऽशुचे ॥ १३ ॥
स्वयं शमयितुं नाऽशं विदित्वा सन्नतः स्तुते ॥
चिराय भवतेऽपीड्य सहोरुगुरवे शुचे ॥ १४ ॥

श्लोकयमकः ॥ द्वौ श्लोकावेतौ पृथगर्थौ द्रष्टव्यौ ॥ स्वयं स्वतः । शमयितुं नाशयितुं । नाशं विनाशं कर्म । विदित्वा ज्ञात्वा । सन्नतः प्रणतः । तु अत्यर्थं । ते तुभ्यं । चिराय नित्याय अक्षयपदनिमित्तं वा । भवते प्रभवते । पीड्यं सविघातं न पीड्यमपीड्यं महः तेजः अपीड्यमहसो रुक् तया उरुः महान् तस्मै, अपीड्यमहांश्चासौ उरुगुरुश्च इति वा ॥ अशुचे अशोकार्थं ।

अन्वयोऽयं— अशोकार्थं नाशं शमयितुं विदित्वा सन्साधु भो जिन अपीड्यमहोरुगुरवे प्रभवते अप्रतिहतकेवलज्ञानदीप्तये चिराय तुभ्य अत्यर्थं स्वयं नतः ॥ स्वयं शमयितुं नाऽशंविदित्वा सन्नतः स्तुते ॥ चिराय भवतेऽपीड्यमहोरुगुरवे शुचे ॥ स्वयं शोभनपुण्यं । शं सुखं । अयतुं गन्तुं । ना पुरुषः अशं दुःखं विद् बोधवान् इत्वा गत्वा अतिक्रम्य । सन् विद्यमानः । अतः अस्मात् कारणात् स्तुते स्तुतिविषये । चिराय चिरेण अनन्तकालेन । अथवा अचिरेण तत्क्षणात् । भवते प्राप्नुते भवेः प्राप्ताविणिरिति अमोघवृत्तौ उक्तत्वात् आत्मनेपदं । अपि सम्भावने । हे ईड्य पूज्य । महती उर्वी गीर्वाणी यस्यासौ महोरुगुः । स एव रविः । तस्य सम्बोधनं । शुचे शुद्ध । एतदुक्तं भवति— ईड्य शुचे महोरुगुरवे भो जिन स्तुते स्तुतिविषये सन्, अत एव अशं इत्वा, शं गंतुं विद् ना पुमान् चिराय स्वयमपि पुण्यमपि भवते प्राप्नुते ॥ श्लोकस्य सम्पूर्णावृत्त्या संयुतत्वाद्यभावः ॥

सुकल्याणोऽसुकल्याणो जिनः पायादसंगारिः ॥

असुषु प्राणेषु रक्षणदक्षध्वनिः । कल्यो नीरोगदक्षयोरित्यभिधानात् ॥

गर्भेमाभोजराभीरोऽजराभीरोः पुरोरग्रं ॥ १५ ॥

जनानां सबन्धुः सदा यस्य वाणी विभानूयमाना[1] विभानूयमाना[2] ॥१६॥

सनाभियः स नाभेयः सदाऽपायात् सदा पायात् ॥ १७ ॥

सनाभियः नित्यं भयरहितः सदा बोधेन ॥ पद्लृ विशरणगत्यवसादनेषु इति धातोर्गत्यर्थे क्विप्विधानात् ॥

मह्लादभ्रमध्ये प्रिये पश्य चन्द्रं । मह्लादभ्रमध्ये तवास्यायमानम् ॥

सुबिम्बाधरेऽस्या नितम्बाम्बरेण । गिरिस्था लता वा नितम्बाम्बरेण ।१८।

अम्बरे सम्भूत आम्बरो मेघः ॥

विमानासितांगोऽमरेन्द्रो नुनाव ।

---

१ विभया शोभया नूयमाना । २ विशिष्टभूयं इव आचरती ॥

प्रमोरुक्तिमिद्धां विमानासितां गोः ॥ १९ ॥

विशिष्टलक्ष्मीं अनाशितां अबाधितां । असू क्षेपणे इति ण्यन्तो धातुः । गोः स्वर्गादागत्य ॥

कामिनीर हितायत कामि नीराहितायते ॥

कामिनीराहिता यते कामिनीरहिताय ते ॥ २० ॥

क परमात्मन् आमिनीर ज्ञानिन् निःकाम । रः पुमान् पावके कामे क्षये वज्रे शिवे वृतौ इत्यभिधानात् । हित । आयते कोपपीडोपरम । केन विधात्रा अम्यतेस्म कथ्यतेस्म इति काम् वेदः तस्मिन्कामि । नीः मोक्ष-मार्गस्य प्रणेता । आहितायते वेदे तन्निराकरणद्वारेण शत्रूयते भवान् इति यतः । क रविभूत अमिनी भक्तिमती ई रहिता रात् क्षयात् हिता च्युता । ही गतिवृद्धयोः इति धातुः ॥ इति यतश्च ततः भो यते ते नमोऽस्त्वित्यध्याहार्यम् ॥

महीयं ते महीयन्ते महीयन्ते पुरो जीवाः ॥ २१ ॥

इयं मही । ते । मही शक्रकृतोत्सववान् अतस्त्वामाश्रिताः ईयन्ते गणै. प्राप्यन्ते महीयन्ते । पूज्याश्च ॥

महाभारतीते महाभाऽरतीते ॥

त्वयि द्योततेऽच्छमहा भारती ते ॥ २२ ॥

इतेमहाभा प्राप्तरमोत्सवसदृशी । अरतिमिते वीतरागे । अच्छमहाः निर्मलतेजोगुणा । भरतक्षेत्रे जाता ॥

सुरागोऽङ्गनया मुक्तः । सुरागोंऽगसुरागोंऽग ॥ २३ ॥

अंगनया सह शोभमानरागस्त्यक्तः । भो पुरो त्वत्तः सुरायाः समागमागश्च मुक्तं जीवैः । अंगमेव सुरागो मेरुर्यस्य । अंग गच्छ । त्वं । भाव्यत्वेन मम चेतो भव ॥

जिनं तं नमामो प्रमादानकायं ॥

---

१ अम गतिभक्तिशब्देष्विति धातुः । ये ये गत्यर्थास्ते ज्ञानार्थाः ॥ राजिस्कान्ता नीरः । आमिश्चासौ नीरश्च आमिनीरः तत्सम्बुद्धिः ॥

प्रमादानकायं प्रमादानकायम् ॥ २४ ॥

न अकस्य दुःखस्य आयः प्राप्तिर्यस्य बोधक्षायिकदानस्वरूपं उपमाच्छेदकपुण्यं ॥ नमामोहभेदं न मामोहभेदं न मामोऽहभेऽदं नमामो ह भेदम् ॥ २५ ॥ नमस्य प्रणामस्य अमस्य भक्तेः ऊहस्य विचारस्य भायाः कान्तेः ई संपत्तिं ददातीति तं। मायां राज्यादिसम्पत्तौ। अमोहभेदं अज्ञानविशेषहीनं॥ मया परिमित्या अमन्ति स्तुतिमुखरा वदन्तीति मामः स्तोतारः ॥ ये जहन्ति न त्यजन्ति सदा तत्रैव चरन्तीति अहानि भानि नक्षत्राणि यत्र तदहभं गगनं तत्र समवसरणे स्थितम् ॥ न द्यति धर्मं न खण्डयतीति अदम् ॥ ह पादपूरणे ॥ भेदं कर्माद्रिभेदनं जिनं नमाम इति न ये किन्तु नमाम एव ॥

विद्योतविद्योऽतमसि स्वकाये। कामान्तकामान्तकृदीशिताऽभात् ॥
राजीवराजीव तनौ सुराणां। नेत्राऽलिनेत्रालिरवादि तत्त्वम् ॥ २६ ॥

कामान्तकयोरमस्य दारिद्यस्य च अन्तकृत् विनाशकारी। यस्य तनौ भ्रमरसन्निभनेत्रावली पद्मशोभिन्या पद्मिन्यामिव पुरुहेमाभतनुप्रभासंगात् पद्मपंक्तिरिव हेमवर्णा अभात् ॥ तेन नेत्रा उपदेशकेन जिनेन ॥

अभवदूर्ध्वमुदारमुदारवः। सुरगणैर्विहितो विहितो भियाम् ॥
श्रुतिमधो मुखरो मुखरोदितो। व्यथितभोजगतो जगतोऽरुणत् ॥२७॥

नेमीश्वरे दीक्षार्थं गच्छति सति। भोजगतः। भियां श्रुतिं भयंकरश्रवण मुत्पादयन् मुखरोदितः मुखजातरोदनध्वनिः ॥

सरसि पङ्कजराजितराऽजित- जिन तनावुपलक्षणलक्षण-- ॥
ततिरिवैवमराजत राजतगिरिसितोक्तिनिरं जनरंजन ॥ २८ ॥

उपलक्ष्यन्ते दृश्यन्ते इत्युपलक्षणानि च तानि लक्षणानि च हलकुलिशादीनि। निर्मलया निरा निष्कलंकः यथा भवति तथा जीवाञ्जयतीति। पादावृत्तौ दर्शितप्रकारेण पदावृत्त्यादावपि बोद्धव्यमिति न क्रमाः कथ्यन्ते ॥

प्रमदया गतया रहिते त्वयि प्रमदयागतया जिन भासते ॥
सुमनसां सहिते ततिरायता सुमनसां सहिते करसारिता ॥ २९ ॥

प्रकृष्टश्रीकृपागतेन । हितेन सुखेन युते । सुराणां हस्तप्रेरिता ॥

सारासारासारसमाला सरसीयं सारं कूजत्यत्र वनान्ते सुरकान्ते ॥
सारासारानीरदमालानभसीयं तारं मन्द्रं निस्वनतीतः स्वनसारा ॥ ३० ॥
इह जहौ वसुधाशिबिकासनं । पुरुतपोऽभि सुधाशिविकासनम् ॥
नमिसमः स शिलातलमायया–। वपगमार्थमिलातलमायया ॥ ३१

स नेमीश्वरः वसुधाशिबिकादिकं हित्वा दीक्षार्थं शिलातलमाययौ ॥

सा राजते चन्द्रविभोरसाध्वसा राजते कान्तिततिः शरीरे ॥
सा राजते जन्तुगणातिमीमांसा राजतेजोभिरमेयमूर्तिः ॥ ३२ ॥

रजतसमूहभूते । जन्तुगणस्यातिमीमांसा वस्तुविचारणा यस्यास्सकाशात् सा। चन्द्रकिरणैः ॥

शुभा विभाति ते विभो महाविभाऽतिदेशक ॥
तनाविभातिमंदगस्त्रिया विभाति मंडपे ॥ ३३ ॥

गजवदतिशयितमन्दगतिभिः सुरकान्तादिभिः स्त्रीभिः शोभमानेऽपि महती विशिष्टा निर्विकारा भा कान्तिः ॥

बभौ शचिक्लृप्तसुमापहारः । स्नपःश्रियः कण्ठसमीपहार ॥
दीक्षावने संसृतितापहारः । सुरासुरालीनतमोपहारः ॥ ३४ ॥
भूभृति भूभृति तन्वति सेवां । शं सति शंसति तन्वतिरम्यः ॥
राजति राजतिरोभवकान्तिः । सन्मतिसन्मतिरोऽभवनाथः ॥ ३५ ॥

भुवं मङ्गलं स्वात्मनि तोषवृद्धिं वा बिभर्ति पुष्यति । सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः ॥ अभिप्राये च शक्तौ च प्रादुर्भावे गतौ च भूः । इति धातुदर्पणे ॥ राजानि शं सुखं शंसति च सति । सन्मतिः प्रशस्तज्ञानी चासौ वीरजिनश्च । अः रत्नत्रयहेतुः । अकरो ब्रह्मविष्ण्वीशकमठेष्वंगणे रणे ॥ गौरवेऽन्तःपुरे हेतौ भूषणे इत्याभिधानात् ॥

ततान तानं खलु गायतीशे । ततान तालं च नटत्यधीशे ॥
तताद्विवाद्येन सती सुभद्रा । तताऽस्य पद्मा पुरुषानुवृत्ता ॥ ३६ ॥

१ शरीरेणातिमनोज्ञः । २ मोक्षस्य प्रभुः ॥

वा वानरो भ्रान्तिगतः कुदृष्टः । काकायमानाः कुचरित्रभाजः ॥
भाभारपूर्णोरुवपुश्चरिष्णुः । सासादनस्स्याच्युतदृष्टिरत्नः ॥ ३७ ॥
वन्दते नरवरो जिनेश्वरं । बन्धदूरमकलङ्कमच्युतम् ॥
बन्धुमस्य जगतो विदांवरं । बम्भ्रमीति स न संसृतौ सदा ॥ ३८ ॥
वीतराग जिनसार नमस्ते । पूततत्त्वपरवाक्य नमस्ते ॥
नूतपादवरपद्म नमस्ते । जातरूपधर वीर नमस्ते ॥ ३९ ॥
गायतो महिमाऽयते । गा यतो महिमाय ते ॥
पद्मया स हि तायते । पद्मया सहितायते ॥ ४० ॥

गायतस्तुतिं कुर्वतः महिमा माहात्म्यं अयते गच्छति । गाः वाणीः यतः यस्मात् ॥ महिमानं अयते महिम्ना अयते स्म वा महिमायः तस्य सम्बोधनं ॥ ते तव पद् पादः । मया स हि तायते विस्तार्यते ॥ पद्मया लक्ष्म्या । सहिता आयतिः शरीरायामः यस्यासौ । अथवा पद्मेषु यातीति पद्मया हितेन सह वर्तमाना आयातिर्यस्यासौ सहितायतिः ॥

नतपीलासनाशोक सुमनोऽवर्षभासितः ॥
भामण्डलासनाशोकसुमनोवर्षभासितः ॥ ४१ ॥

नतानां प्रणतानां पीडा व्याधयः ताः अस्यतीति नतपीलासन । अशोक शोकहीन सुमनः शोभनचेतः शोभनबोध । अव रक्ष । ऋषभ आसितः स्थितः सन् ॥

इत्यलङ्कारचिन्तामणौ यमकादिवचनो नाम तृतीयः परिच्छेदः ॥ ३ ॥

---

श्रीमदनन्ततीर्थकरेभ्यो नमः

॥ अथ चतुर्थः परिच्छेदः ॥

चारुत्वहेतुना येन वस्त्वलंक्रियतेऽङ्गवत् ॥
हारकांच्यादिभिः प्रोक्तः सोऽलंकारः कवीशिभिः ॥ १ ॥

चारुत्वहेतुतायां च गुणालंकारयोरपि ॥
गुणः संघटनाश्रित्या शब्दार्थाश्रित्यलंक्रिया ॥ २ ॥
शब्दार्थोभयभेदेन सामान्यात्रिविधा तु सा ॥
तत्रार्थालंकृतिः प्रोक्ता चतुर्धा तु समासतः ॥ ३ ॥
प्रतीयमानशृंगाररसभावादिका मता ॥
स्फुटा प्रतीयमानाऽन्या वस्त्वौपम्यतदादिके ॥ ४ ॥

प्रेयोरसवदूर्जस्विसमाहितभाविकेषु रसभावादिः प्रतीयते ॥ उपमाविनोक्तिविरोधार्थान्तरन्यासविभावनोक्तिनिमित्तविशेषोक्तिविषमसमचित्राधिकान्योन्य-कारणमालैकावलीदीपकव्याघातमालाकाव्यलिंगानुमानयथासंख्यार्थापत्तिसार-पर्यायपरिवृत्तिसमुच्चयपरिसंख्याविकल्पसमाधिप्रत्यनीकविशेषमलिनसामान्य-संगतितद्गुणातद्गुणव्याजोक्तिप्रतिपदोक्तिस्वभावोक्तिभाविकोदात्तेषु विपश्चिच्चेतोरंजनं स्फुटं प्रतीयमानं न विद्यते ॥ व्याजस्तुत्युपमेयोपमासमासोक्तिपर्यायोक्त्याक्षेपपरिकरानन्वयातिशयोक्त्यप्रस्तुतप्रशंसानुक्तनिमित्तविशेषोक्तिषु वस्तु प्रतीयमानं काव्यालंकारत्वं याति ॥ परिणामसन्देहरूपकभ्रान्तिमदुल्लेखस्मरणापन्हवोत्प्रेक्षातुल्ययोगितादीपकदृष्टान्तप्रतिवस्तूपमाव्यतिरेकानिदर्शनाश्लेषसहोक्तिषु गम्यमानमौपम्यं एवमलंकारसादृश्यविभागः ॥ भेदप्रधानमभेदप्रधानमुभयप्रधानमिति साधर्म्यं त्रेधा ॥ तत्पुनरुपमानोपमेययोः स्वतो भिन्नत्वाच्छाब्दमेव न वास्तवमित्येके ॥ तदसत् साधर्म्यस्य वस्तुरूपत्वादन्यथा खरविषाणशशविषाणयोरप्युपमानोपमेयत्वप्रसंगात् ॥

उपमानन्वयौ स्यातामुपमानोपमास्मृती ॥
द्विसाधारणसाधर्म्यमालालंकृतयस्त्विमाः ॥ ५ ॥
रूपकं परिणामश्च सन्देहो भ्रान्तिमानपि ॥
अपन्हवस्तथोल्लेखो भेदसाधर्म्यहेतुकाः ॥ ६ ॥
प्रतीपप्रतिवस्तूपमासहोक्तिनिदर्शनाः ॥
दृष्टान्तो दीपकं तुल्ययोगिन्येत्यतिरेकतः ॥ ७ ॥

अतिशयोत्प्रेक्षाद्वयमध्यवसायमूलम् । विषमविशेषोक्तिविभावनाचित्रासङ्ग-

त्यन्योन्यव्याघाततद्गुणभाविकविशेषाणां विरोधमूलत्वम् ॥ परिसंख्यार्थापत्तिविकल्पयथासंख्यसमुच्चयानां वाक्यन्यायमूलत्वम् ॥ उदात्तविनोक्तिस्वभावोक्तिसमसमाधिपर्यायपरिवृत्तिप्रत्यनीकतद्गुणानां लोकव्यवहारमूलत्वम् ॥ अर्थान्तरन्यासकाव्यलिङ्गानुमानानि तर्कन्यायमूलानि ॥ दीपकसारकारणमालैकावलीमालानां शृङ्खलावैचित्र्यहेतुकत्वम् ॥ मीलनवक्रोक्तिव्याजोक्तयः अपह्नवमूलाः ॥ परिकरसमासोक्ती विशेषणवैचित्र्यहेतू ॥ इदानीमलङ्काराणां परस्परभेदः कथ्यते ॥ परिणामरूपकयोरारोपगर्भत्वेऽप्यारोप्यस्य प्रकृतोपयोगानुपयोगाभ्यां भेदः ॥ उल्लेखरूपकयोरारोपगोचरस्यारोप्यस्वभावसम्भवासम्भवाभ्यां वैलक्षण्यम् ॥ भ्रान्तिमदपह्नवसन्देहानामारोपविषयस्य भ्रान्त्यपलापसंशयैर्भेदः ॥ उपमानन्वयोपमेयोपमाः साधर्म्यस्य वाच्यत्वात्सादृश्यमूलत्वेऽपि तुल्ययोगितानिदर्शनदृष्टान्तव्यतिरेकदीपकेभ्यो भिन्नाः ॥ उपमेयोपमाप्रतिवस्तूपमयोः साधारणधर्मस्य वाच्यत्वप्रतीयमानत्वाभ्यां भेदः ॥ प्रतिवस्तूपमादृष्टान्तौ वस्तुप्रतिवस्तुबिम्बप्रतिबिम्बभावद्वयेन भिद्येते ॥ दीपकतुल्ययोगितयोरप्रस्तुतप्रस्तुतानां समस्तत्वव्यस्तत्वाभ्यां भेदः ॥ उत्प्रेक्षोपमयोरुपमानस्याप्रसिद्धप्रसिद्धत्वाभ्यां भेदः ॥ उपमाश्लेषौ अर्थसाम्येन च भिद्येते ॥ उपमानन्वयौ स्वतोभिन्नत्वाभ्यामुपमानोपमेययोर्भिन्नौ ॥ उपमोपमेयोपमयोरुपमानोपमेयस्वरूपस्य यौगपद्यपर्यायाभ्यां भेदः ॥ समासोक्त्यप्रस्तुतप्रशंसयोरप्रस्तुतस्य प्रतीयमानत्ववाच्यत्वाभ्यामन्यत्वम् ॥ व्यंग्यवाच्यद्वयस्य प्रस्तुतत्वे पर्यायोक्तिः । अप्रस्तुतप्रशंसा वाच्यस्याप्रस्तुतत्वे कथ्यते । ततस्ते भिन्ने ॥ पक्षधर्मत्वव्याप्त्याद्यसम्भवादनुमानतो भिन्नं काव्यलिङ्गम् ॥ साधारणगुणयोगित्वेन भेदादर्शने सति सामान्यम् ॥ उत्कृष्टगुणयोजनहीनगुणतिरोहितत्वे मीलनम् ॥ अन्ययोगव्यवच्छेदेनाभिप्रायाभावादुदात्तस्य परिसंख्यातोऽन्यत्वम् ॥ कार्यसिद्धौ काकतालीयत्वेन कारणान्तरसम्भवे समाधिः । सिद्धावहमहमिकया हेतूनां बहूनां व्यापृतौ समुच्चयः । ततस्तयोरन्यत्वम् ॥ व्याजस्तुत्यपन्हुत्योरपलापस्य गम्यवाच्यत्वाभ्यां श्लेषाणां भेदः

सुगमः ॥ मीलनसामान्यव्याजोक्तिषु साधर्म्यस्य कथंचित्सत्त्वेऽप्यविवक्षितत्वान्न गणना साधर्म्यमूलेषु ॥ इत्यलंकारसांकर्यनिवर्त्तनम् ॥

उपमानन्वयौ स्यातामुपमेयोपमास्मृती ॥
रूपकं परिमाणश्चसंदेहो भ्रान्तिमानपि ॥ ८ ॥
अपन्हवस्तथोल्लेखोत्प्रेक्षे अतिशयस्तथा ॥
सहोक्तिश्च विनोक्तिश्च समासोक्तिस्तथा पुनः ॥ ९ ॥
वक्रोक्तिश्च स्वभावोक्तिर्व्याजोक्तिर्मीलनं तथा ॥
सामान्यतद्गुणाऽतद्गुणविरोधाविशेषकाः ॥ १० ॥
अधिकं च विभावोऽपि विशेषोक्तिरसंगतिः ॥
चित्रान्योऽन्यसमान्यानि तुल्ययोगित्वदीपकम् ॥ ११ ॥
प्रतिवस्तूपमा चापि दृष्टान्तोऽपि निदर्शना ॥
व्यतिरेकस्तथा श्लेषस्तथा परिकरः पुनः ॥ १२ ॥
आक्षेपश्च तथा व्याजस्तुतिरप्रस्तुतस्तुतिः ॥
पर्यायोक्तं प्रतीपं चानुमानं काव्यलिंगकम् ॥ १३ ॥
अपि चार्थान्तरन्यासो यथासंख्यं पुनस्तथा ॥
अर्थापत्तिस्तथातोऽपि परिसंख्योत्तरे तथा ॥ १४ ॥
विकल्पोऽलंकृती द्वे च समुच्चयसमाधितः ॥
भाविकप्रेयसीरस्यथोर्जस्वी प्रत्यनीककम् ॥ १५ ॥
व्याघातश्चापि पर्यायः सूक्ष्मोदात्तद्वयं तथा ॥
परिवृत्तिस्तथा कारणमालैकावलीद्वयम् ॥ १६ ॥
मालादीपकसारौ च तथा संसृष्टिसंकरौ ॥
उभयालंकृतिस्त्वत्र संसृष्ट्यन्तर्भवा मता ॥ १७ ॥

तत्र प्रथममनेकालंकारहेतुत्वादुपमा निगद्यते ॥

वर्ण्यस्य साम्यमन्येन स्वतः सिद्धेन धर्मतः ॥
भिन्नेन सूर्यभीष्टेन वाच्यं यत्रोपमैकदा ॥ १८ ॥

स्वतोभिन्नेन स्वतःसिद्धेन विद्वत्सम्मतेन अप्रकृतेन सह प्रकृतस्य यत्र

धर्मतः सादृश्यं सोपमा ॥ स्वतःसिद्धेनेत्यनेनोत्प्रेक्षानिरासः ॥ अप्रसिद्ध-स्याप्युत्प्रेक्षायामनुमानत्वघटनात्॥ स्वतो भिन्नेनेत्यनेनानन्वयनिरासः॥ वस्तुन एकस्यैवानन्वये उपमानोपमेयत्वघटनात् ॥ सूर्यभादृष्टेनेत्यनेन हीनोपमा-दिनिरासः ॥ उदाहरणम्—

समुद्र इव गम्भीरः सुमेरुरिव सून्नतः ॥

दिग्दन्तीव च षट्खण्डधौरेयो भरतेश्वरः ॥ १९ ॥

धर्मत इत्यनेन श्लेषनिरासः ॥ श्लेषालंकारे शब्दसाम्यमात्रस्यांगीकारात् । न गुणक्रियासाम्यस्य । उदाहरणम्—

सन्मार्गे सुविराजन्ते तमोनिवहवारणाः ॥

गुणानां राजयो नाना तारालय इव स्फुटाः ॥ २० ॥

अत्र ताराराजय इव गुणराजय इति नोपमा । सन्मार्गे इत्यत्र अर्थसाम्या-भावात् सन् जैनो मार्गो रत्नत्रयरूपो यस्य मुनेः । तारापक्षे नभसीति व्याख्यानात् । किन्तु श्लेष एव ॥ साम्यमन्येन वर्ण्यस्येत्यनेन प्रतीपालंकार-व्यावृत्तिः । प्रतीपे उपमानत्वकल्पनादुपमेयस्य प्रकृतेन सहाप्रकृतस्य साधर्म्यवर्णनात ॥

उदाहरणम्—

विशेषं न जनो वेत्ति किं कुर्मः कस्य भाष्यते ॥

यन्महाभरतेशेन चन्द्रमा उपमीयते ॥ २१ ॥

अत्र प्रकृतेन भरतेशेन अप्रकृतस्य चंद्रमसः सादृश्यमिति प्रतीपालंकारो नोपमा ॥ साम्यमित्यनेनोपमेयोपमानिराकरणम् ॥ तस्यामुपमानोपमेययोर-नेकदा सादृश्यवचनात् ॥ उदाहरणम्—

सरस्वतीव भाति श्रीः श्रीरिवास्ति सरस्वती ॥

सुभद्रा ते इवाभाति ते सुभद्रेव चक्रिणि ॥ २२ ॥

अत्र सरस्वतीव श्रीः श्रीरिव सरस्वतीत्यनेनानेकदा इव शब्दद्वयेन ब्राह्मी-लक्ष्मीसुभद्राणां साम्यं निरूप्यत इति उपमेयोपमा ॥ वाच्यमित्यनेन केषांचिद्रूपकादिप्रतीयमानौपम्यानां निरासः ॥ उदाहरणम्—

श्रीमते सकलज्ञानसाम्राज्यपदमीयुषे ॥
धर्मचक्रभृते भर्त्रे नमः संसारभीमुषे ॥ २३ ॥

अत्र ज्ञानसाम्राज्यधर्मचक्रपदानां सामानाधिकरण्यप्रयोगान्यथानुपपत्त्या साम्यं प्रतीयत इति नोपमा । किन्तु रूपकालंकारः ॥

प्रतापी किमयं सूर्यः सुकान्तिः किमयं विधुः ॥
मेरुः किं निश्चलो वेति भरतो वीक्षितो जनैः ॥ २४ ॥

अत्र भरतेशस्य सूर्यादीनां चान्योऽन्यभेदप्रतीतेः संशयहेतुत्वान्यथानुपपत्त्या सादृश्यं लक्ष्यते इति नोपमा ॥ किन्तु सन्देहालंकारः ॥

चन्द्रप्रभं नौमि यदंगकांतिं ज्योत्स्नेति मत्वा द्रवतीन्दुकान्तः ॥
चकोरयूथं पिबति स्फुटन्ति कृष्णेऽपि पक्षे किल कैरवाणि ॥ २५ ॥

अत्र चन्द्रप्रभांगकान्तौ ज्योत्स्नाबुद्धिः ज्योत्स्नासादृश्यं विना न स्यादिति सादृश्यप्रतीतौ भ्रान्तिमदलंकारः ॥

लक्ष्मीगृहमिति प्राज्ञा ब्राह्मीपदमिति प्रजाः ॥
कलाखनिरिति प्रीताः स्तुवन्ति सुपुरोः पुरीम् ॥ २६ ॥

अत्र पुरे गृहाद्यारोपः साम्यं विना न स्यादिति सादृश्यकल्पनादुल्लेखालंकारः ॥

न च मुक्तावली वक्षोलम्बमानाऽऽदिचक्रिणः ॥
वक्षोगृहनिवासिन्या लक्ष्म्याः स्रक्कबरीगता ॥ २७ ॥

अत्र वक्षोलम्बितमुक्तावलीमवलोक्य स्रगित्यारोपः साम्यहेतुरेवेति साम्याक्षेपादपन्हवः ॥ एवं तुल्ययोगिता दीपकं प्रतिवस्तूपमा चेति दृष्टान्तसहोक्तिव्यतिरेकानिदर्शनेष्वपि सादृश्यस्य गम्यत्वान्नोपमाशंका ॥ अतो विश्वेभ्यः साम्यहेतुभ्यो विलक्षणेयमुपमा ॥ सा तावद्द्विधा, पूर्णोपमा लुप्तोपमा चेति ॥

उपमानोपमेयोरुधर्मसादृश्यवाचिनाम् ॥
वा यथेवादिशब्दानां मता पूर्णा प्रयोगतः ॥ २८ ॥
एकस्य वा द्वयोर्लुप्ता त्रयाणां वा विलोपतः ॥

पूर्णोपमा पुनर्द्वेधा श्रौती चार्थीति भाषिता ॥ २९ ॥
साक्षात्सादृश्यसंवाचियथेवादिप्रयोगतः ॥
श्रौती चार्थी तु संकाशनिकाशादिप्रयोगतः ॥ ३० ॥
ते प्रत्येकं त्रिधा वाक्यसमासाभ्यां च तद्धितात् ॥
पूर्णा षोढेति लुप्ता तु बहुधा कविनां मता ॥ ३१ ॥

अथोदाहरणानि—

श्रौती वाक्यगता पूर्णा यथा षट्खण्डपालिनः ॥
भरतस्य यथा कीर्तिश्चान्द्रीन्दोर्व्याप्तसर्वभूः ॥ ३२ ॥
श्रौती समासगा पूर्णा यथा स भरतो बभौ ॥
भास्वानिवोदयाद्रिस्थस्तेजोनिवहभास्वरः ॥ ३३ ॥

अत्र भास्वानिवेति इवेन सह नित्यसमासः ॥

श्रौती तद्धितगा पूर्णा यथा भरतचक्रिणः ॥
शेषवत्कूर्मवद्बाहौ धुरीणे विबभौ धरा ॥ ३४ ॥
आर्थी वाक्यगता पूर्णा यथाऽर्थिजनसन्ततेः ॥
अभीष्टफलदत्वेन चक्री कल्पद्रुणा समः ॥ ३५ ॥
आर्थी वाक्यगता पूर्णा यथा हेमाद्रिसन्निभः ॥
जिनाभिषिक्तगन्धाम्बुपवित्रत्वेन चक्रभृत् ॥ ३६ ॥
आर्थी तद्धितगा पूर्णा यथा तेजसि सूर्यवत् ॥
गाम्भीर्येऽम्भोधिवत् तौंग्ये मेरुवच्चक्रवर्त्यभात् ॥ ३७ ॥

तेन समस्तेन सदृश इति सदृशार्थे विहितस्य वत्प्रत्ययस्योपादाने आर्थी ॥ तत्र तस्येवेतीवार्थे विहितस्य वत्प्रत्ययस्य स्वीकारे श्रौती ॥ एषामुदाहरणेषु भरतस्य कीर्तिरित्याद्युपमेयवाचिनामिन्दोश्चान्द्रीत्याद्युपमानवाचिनां व्याप्तसर्वभूरित्यादिसाधारणधर्मवाचिनां यथेत्यादिसादृश्यवाचिनां च चतुर्णां रचितत्वेन पूर्णात्वम् ॥

लुप्ता वाक्यगतानुक्तधर्मा श्रौती मता यथा ॥
चूते यथा पिकाः सर्वे तथा चक्रिणि ते जनाः ॥ ३८ ॥

लुप्ता समासगाऽनुक्तधर्मा श्रौती मता यथा ॥
पादपीठीं नृपास्तस्य भेजिरे देवतामिव ॥ ३९ ॥

अत्र इवेन सह नित्यसमासः ॥

लुप्ता वाक्यगतानुक्तधर्मा चार्थी मता यथा ॥
क्षीराब्धिध्वनिना तुल्यमादिचक्रिवचो बभौ ॥ ४० ॥
आर्थी समासगा लुप्ताऽनुक्तधर्मा मता यथा ॥
पुरोर्वाराशिसुध्वानसदृशं नौनुमो ध्वनिम् ॥ ४१ ॥
लुप्ता तद्धितगाऽनुक्तधर्मा चार्थी मता यथा ॥
गौतमं जिनदेशीयं नमामि गणिनं मुदा ॥ ४२ ॥

एकस्य धर्मस्यानुपादानं लुप्तत्वमेषूदाहरणेषु ॥

लुप्ता कर्मक्यचाऽनुक्तधर्मेवादिर्यथा तु सा ॥
भरतेशयशोवृन्दं कैलासीयति पर्वतान् ॥ ४३ ॥
लुप्ताऽऽधारक्यचानुक्तधर्मेवादिर्यथा पुनः ॥
चक्री लतागृहे वासगेहीयति सुभद्रया ॥ ४४ ॥
लुप्ता कर्मणमाऽनुक्तधर्मेवादिर्यथा मता ॥
पुरोरंगं महामेरुदर्शं पश्यन्ति साधवः ॥ ४५ ॥
लुप्ता कर्तृणमाऽनुक्तधर्मेवादिर्यथा मता ॥
भरतेशयशो लोके ज्योत्स्नाचारं चरत्यरम् ॥ ४६ ॥
क्विपा चानुक्तधर्मेवादिर्यथा जिनशासनम् ॥
पीयूषति सुदृष्टीनां कालकूटति दुर्दृशाम् ॥ ४७ ॥

उदाहरणेष्वेषु द्वयोरनुपादानं कैलासीयति पर्वतानित्यत्र कर्मक्यचि कैलासमिव करोतीति वासगेहीयतीति आधारक्यचि वासगेहे इव वर्तत इति मेरुदर्शनं पश्यन्तीति कर्मकारकात् णमि सति मेरुमिव पश्यन्तीति ज्योत्स्नाचारमिति कर्तृणमि सति ज्योत्स्नेव चरतीति ॥ अत्र इव शब्दोऽन्तर्गत इति लुप्तत्वम् ॥

लुप्ता कर्मक्यचाऽनुक्तधर्मेवादिर्यथा मता ॥

आदिब्रह्मगिरो लोके सुधीयन्ति महात्महानाम् ॥ ४८ ॥
लुप्ता क्यचाऽपि चानुक्तधर्मेवादिर्यथा मता ॥
कल्पवृक्षायते धर्मो जिनप्रोक्तः सुखार्थिनाम् ॥ ४९ ॥
लुप्ताऽनुक्तोपमाना तु वाक्यगा सा मता यथा ॥
भरतस्य समस्त्यागी नास्त्येव त्रिजगत्यपि ॥ ५० ॥
लुप्ताऽनुक्तोपमाना या यथा सा तु समासगा ॥
भरतेशसमो राजा नास्ति नास्त्येव विष्टपे ॥ ५१ ॥
यथा समासगा लुप्ता वाक्यधर्मोपमानिका ॥
भरतेशयशस्तुल्यं न किञ्चिदपि भूतले ॥ ५२ ॥

अत्र द्वय धर्मस्याप्यनुपादानम् ॥ अत्रोदाहरणचतुष्के न प्रतीपालङ्कारशङ्का आक्षेपाभावादुपमानस्य चक्रिणः ॥

लुप्ता समासगाऽनुक्तेवादिः सम्भाविता यथा ॥
भरताधिपचारित्रं सतां शीतांशुशीतलम् ॥ ५३ ॥
लुप्ता समासगाऽनुक्तधर्मेवाद्युपमानिका ॥
भरतेशो बभौ लोके सौधर्मेन्द्रपराक्रमः ॥ ५४ ॥

अत्र सौधर्मेन्द्रपराक्रम इव पराक्रमो यस्येति धर्मेवाद्युपमानं लुप्तमिति लुप्तोपमा ॥ साधारणधर्मस्वीकारे द्वैविध्यमुपमेयोपमानगत्वेन युगपत्साधर्म्यनिर्देशः ॥ तद्द्वयगत्वेन पृथगुपादानं वा ॥ पुनः पृथगुपादानं द्विधा ॥ वस्तुप्रतिवस्तुभावेन बिम्बप्रतिबिम्बभावेन चेति ॥ अर्थस्यैकस्यैव शब्दद्वयेन कथनं वस्तुप्रतिवस्तुभावः ॥ अर्थद्वयस्य पृथगुपादानं बिम्बप्रतिबिम्बभावः ॥ तत्र सकृत्साधर्म्यनिर्देशो यथा ॥

राजानो नतमूर्द्धानः सेवन्ते भरतेश्वरम् ॥
गुणानामाकरं पूज्यं पुरुं देवा इवाभितः ॥ ५५ ॥

अत्र राज्ञां देवानां च नतमूर्धान इति युगपदेव सादृश्यमुक्तम् ॥ तदा गुणानामाकरं पूज्यमिति भरतस्य पुरोश्च समधर्मत्वं सकृदेवोक्तम् ॥

भूषितो भरताधीशो रत्नैरुरुसुखप्रदैः ॥

गुणैरलंकृतः सर्वैरादिब्रह्मेव भास्वरः ॥ ५६ ॥

अत्र भूषितालंकृतशब्दाभ्यामेकार्थत्वाद्वस्तुप्रतिवस्तुभावः ॥

हारशोभितवक्षःश्रीरादिचक्री बभौ तराम् ॥
महामेरुरिव श्वेतनिर्मलायतनिर्झरः ॥ ५७ ॥

अत्र हारनिर्झरयोः सादृश्येन चक्रिमेर्वोः सादृश्यमिति बिम्बप्रतिबिम्बभावः अन्यदपि द्वैविध्यमुपमालङ्कारस्य समस्तविषया एकदेशवर्तिनी चेति ॥

देशो नाक इवाभाति विनीतेन्द्रपुरीव च ॥
पौराः सुरा इवाभान्ति मघवानिव चक्रिराट् ॥ ५८ ॥

एषा समस्तविषया ॥

गिरिभिरिव चलद्भिर्वारणैः श्रीतरंगै- ।
रिव चलिततुरंगैर्यानपात्रध्वजैर्वा ॥
प्रतिरथमुरुशोभैः केतनैर्व्यालजालै- ।
रिव धृतकरवालैश्चक्रिसैन्यं प्रतस्थे ॥ ५९ ॥

अत्र सैन्यं समुद्र इवेति सामर्थ्यात्सिद्धेरेकदेशवर्तित्वम् ॥ इयमुपमा माला रूपेण दृश्यते ॥

पुष्पति हंसति हारति कैलासति कुमुदति क्षपाकरति ॥
रजताचलति मुकुन्दति यशोगणो भरतराजस्य ॥ ६० ॥

अत्रैकोपमेयस्यानेकोपमानप्रदर्शनेन मालात्वम् ॥ भेदाभेदसाधारणं साधर्म्य-प्रयोजकमुपमायाम् ॥ पुनरप्युपमाविशेषोऽयम्—

चन्द्रबिम्बमिवास्यं ते पुंश्चकोरदृगुत्सवम् ॥
साक्षात्सादृश्यधर्मोक्तेरिति धर्मोपमा तु सा ॥ ६१ ॥
पल्लवाविव पाणी ते पादौ पद्माविव प्रिये ॥
इति या गम्यमानैकधर्मा वस्तूपमा तु सा ॥ ६२ ॥
त्वद्बोध इव गम्भीरः क्षीराब्धिर्भाति भो जिन ॥

---

१ विनीता अयोध्यानगरी ॥

विपर्यासात्प्रसिद्धस्य विपर्यासोपमा मता ॥ ६३ ॥
त्वत्पदे इव नीरेजे नीरेजे इव ते पदे ॥
इत्यन्योऽन्योपमाऽन्योऽन्यसमुत्कृष्टत्वशंशिनी ॥ ६४ ॥
त्वद्विया दर्पणेनैव सदृङ् नान्येन केनचित् ॥
इतीतरसदृक्षत्वहानेः सा नियमोपमा ॥ ६५ ॥
चन्द्रोऽन्वेतु मुखं तावदस्त्यन्यद्यदि तादृशम् ॥
तत्सादृश्यकरं तत्स्यादित्युक्ताऽनियमोपमा ॥ ६६ ॥
समुच्चयोपमा क्षीरसिन्धुमन्वेति केवलम् ॥
न गाम्भीर्येण बोधस्ते नैर्मल्येन च भो जिन ॥ ६७ ॥
नेत्रे त्वय्येव दृश्येते कासारे ललितोत्पले ॥
इयमेव भिदा नान्या स्यादित्यतिशयोपमा ॥ ६८ ॥
स्वयोषिदास्यबुध्येन्दुमनुधावति नायकः ॥
प्रासादतलमारुह्येत्येषा मोहोपमा मता ॥ ६९ ॥
भ्रमद्भ्रमरमब्जं किं किं ते लोलाम्बकं मुखम् ॥
मनो दोलायते मे भो इत्येषा संशयोपमा ॥ ७० ॥
न पद्मे जडगे शोभा चंद्रे नापि कलङ्किते ॥
अतस्त्वदास्यमेवेति मता सा निश्चयोपमा ॥ ७१ ॥
सुगन्धि परमाल्हादि विकाशपरिमण्डितम् ॥
शतपत्रमिवास्यं ते इति श्लेषोपमा स्मृता ॥ ७२ ॥
समानशब्दवाच्यत्वे स्यात्सन्तानोपमा यथा ॥
वधू राजकरस्पर्शोद्विकचोत्पलिनीव सा ॥ ७३ ॥

राजकरः भूपतिहस्तः चन्द्रकिरणश्च ॥

इन्दुः क्षयी रजःपूर्णे पद्मं ताभ्यां मुखं तव ॥
समं तथापि चोत्कृष्टमिति निन्दोपमोदिता ॥ ७४ ॥
शशी शम्भुशिरोवर्ती पद्मोऽब्जोत्पत्तिकारणम् ॥
समौ तौ वदनेनेति सा प्रशंसोपमा मता ॥ ७५ ॥

सममास्यं तवाब्जेनेत्याचिख्यासु मनो मम ॥
स दोषोऽस्तु गुणो वाऽस्त्वित्याचिख्यासोपमोदिता ॥ ७६ ॥
शरदिन्दुः स्फुटं पद्मं तवास्यमिति च त्रयम् ॥
स्फुटान्योऽन्यविरोधीति सा विरोधोपमा मता ॥ ७७ ॥
प्रतिगर्जितुमास्येन तवाब्जं जातु न क्षमम् ॥
विषकण्टकसङ्गीति प्रतिषेधोपमा मता ॥ ७८ ॥
त्वदास्यमेणदृष्यङ्कमेणेनैवाङ्कितो विधुः ॥
तुल्य एव तथाऽप्येष नोत्कर्षीति चटूपमा ॥ ७९ ॥
न शशीवक्त्रमेवेदं नोत्पले लोचने इमे ॥
इति सुव्यक्तसाधर्म्यात्तत्त्वाख्यानोपमैव सा ॥ ८० ॥
इन्दुपङ्कजयोस्साम्यमतिक्रम्य तवाननम् ॥
स्वेनैवाभूत्समं चेति स्यादसाधारणोपमा ॥ ८१ ॥
एकत्र सञ्चितो वेन्दुः सर्वकान्तिगुणो वरः ॥
वदनं ते विभातीति सात्वभूतोपमा मता ॥ ८२ ॥
सूर्यादिव जलं चन्द्राद्वाऽग्निर्वा विषतोऽमृतम् ॥
त्वदास्यात्परुषा वाणी चेत्यसम्भावितोपमा ॥ ८३ ॥
उद्गतं चन्द्रबिम्बाद्वा पद्ममध्यादिवोदितम् ॥
भो सुभद्रे शुभं वक्त्रमिति सा विक्रियोपमा ॥ ८४ ॥
वस्तूपन्यस्य यत्किञ्चिन्न्यासस्तत्सदृशस्य तु ॥
सादृश्यप्रत्ययोऽस्तीति प्रतिवस्तूपमा मता ॥ ८५ ॥
पुरोर्बहुसुतेष्वेष चक्री भरत एव च ॥
किं ज्योतिषां गणः सर्वः सर्वलोकप्रकाशकः ॥ ८६ ॥

अस्यां समानधर्मेणैव न्यसनं। अर्थान्तरन्यासालंकारे तु प्रस्तुतार्थसाधनक्षमस्य सदृशस्य वा असदृशस्य वा न्यसनमिति सा भिन्ना तस्मात् ॥

एकया क्रियया हीनं समाहृत्याधिकेन तु ॥
वदन्ति कवयो यत्सा तुल्ययोगोपमा यथा ॥ ८७ ॥

नाकस्येंद्रः सु जागर्ति रक्षणाय भुवो निधीट् ।
निरस्यन्तेऽसुरास्तेन राजानोऽनेन गर्विताः ॥ ८८ ॥
मेरुः स्थैर्येण कान्त्येन्दुर्गाम्भीर्येणाम्बुधिं रविम ॥
तेजसाऽनुकरोतीति मता हेतूपमा तु सा ॥ ८९ ॥

एषूदाहरणेषु क्वचिन्नमतः क्वचिदर्थतो वा भेदोऽस्ति ॥

न लिंगं न वचो भिन्नं नाधिकत्वं न हीनता ॥
दूषयत्युपमां यत्र नोद्वेगो यदि धीमताम् ॥ ९० ॥
स्त्रीव षण्डः प्रयात्यत्र स्त्री पुमानिव भाषते ॥
धनं वोपार्जिता विद्या प्राणा इव मम प्रिया ॥ ९१ ॥
त्वद्वद्दाभाति देवेन्द्र त्वं मेरुरिव राजसे ॥
इत्येवमादिकं योग्यं वर्णनीयं मनीषिभिः ॥ ९२ ॥
असम्मतिः क्वचित्तेषां धीमद्भिः क्रियते यथा ॥
हंसीव चंद्रमाः शुभ्रो नभः पद्माकरा इव ॥ ९३ ॥
शुनीव गृहदेव्यस्ति खद्योतो जिनबोधवत् ॥
इत्यादिस्त्यज्यते सद्भिश्चिन्त्यतां तत्र कारणम् ॥ ९४ ॥

इववायथासमाननिभतुल्यसङ्काशनीकाशप्रतिरूपकप्रतिपक्षप्रतिद्वन्द्वप्रत्यनीक-विरोधीसदृक्सदृक्षसदृशसमसंवादिसजातीयानुवादिप्रतिबिम्बप्रतिच्छन्दसरूप-सम्मितसलक्षणाभसपक्षप्रख्यप्रतिनिधिसवर्णतुलितशब्दाः कल्पदेशीयदेश्य-वदादिप्रत्ययान्ताश्च चन्द्रप्रभादिशब्देषु समासश्च ॥

द्रुह्यति निन्दति हसति प्रतिगर्जति संरुणद्धि धिक्कुरुते ॥
अनुवदति जयति चेर्ष्यति तनुते सूयति कदर्थयति ॥ ९५ ॥
स्पर्द्धते द्वेष्टि मुष्णाति विगृण्हात्यधिरोहति ॥
तमन्वेति पदं धत्ते कक्ष्यां तस्य विगाहते ॥ ९६ ॥
तच्छीलमनुबध्नाति तन्निषेधति लुम्पति ॥
लक्ष्मीं साऽनुकरोतीन्दुरास्यलक्ष्मीं समृच्छति ॥ ९७ ॥

इत्याद्याः शब्दाः सादृश्यवाचकाः ॥

द्वितीयार्थनिवृत्यर्थं यत्रैकस्यैव रच्यते ॥
उपमानोपमेयत्वं मतोऽनन्वय इत्यसौ ॥ ९८ ॥

यथा–

सुधासूतिसहस्रांशुरत्नाकरसुराद्रयः ॥
सन्तु सत्यपि नाभेयो नाभेय इव राजते ॥ ९९ ॥
पर्यायेणोपमानोपमेयत्वमवमृश्यते ॥
द्वयोर्यत्र स्फुटं सा स्यादुपमेयोपमा यथा ॥ १०० ॥
अर्थः काम इव स्फीतः कामोऽर्थ इव पुष्कलः ॥
धर्मस्ताविव संसिद्धस्तौ धर्म इव चक्रिणि ॥ १ ॥

एषां केषाञ्चिदन्योऽन्योपमैव ॥

सदृशस्य पदार्थस्य सदृग्वस्त्वन्तरस्मृतिः ॥
यत्रानुभवतः प्रोक्ता स्मरणालङ्कृतिर्यथा ॥ २ ॥
भरताख्यमहीशेन पालितोऽयं प्रजागणः ॥
पुरुराजस्य तां वृत्तिं स्मरति स्म जगद्गुरोः ॥ ३ ॥

भेदाभेदसाधारणसाधर्म्यहेतुकालङ्कारास्तूक्ताः ॥

अतिरोहितरूपस्य व्यारोपविषयस्य यत् ॥
उपरञ्जकमारोप्यं रूपकं तदिहोच्यते ॥ ४ ॥

मुखं चन्द्र इत्यादौ मुखमारोपस्य विषयः आरोप्यश्चंद्रः । अतिरोहितरूपस्येत्यनेन विषयस्य सन्दिह्यमानत्वेन तिरोहितरूपस्य सन्देहस्य भ्रान्त्या विषयतिरोधानरूपस्य भ्रान्तिमतः अपन्हवेनारोपविषयतिरोधानरूपस्यापन्हवस्यापि च निरासः ॥ व्यारोपविषयस्येत्यनेनोत्प्रेक्षादेरध्यवसायगर्भस्योपमादीनामनारोपहेतुकानां व्यावृत्तिः ॥ उपरञ्जकमित्येतेन परिणामालङ्कारनिरासः । तत्र प्रकृतोपयोगित्वेनारोप्यमाणस्यान्वयो न प्रकृतोपरञ्जकतया । विलक्षणमिदमितः सर्वेभ्यः सादृश्यमूलेभ्यः ॥ तत्तु सावयवं निरवयवं परम्परितमिति त्रिधा। सावयवं पुनर्द्विधा समस्तवस्तुविषयमेकदेशवर्ति चेति ॥ निरवयवं च केवलं मालारूपं चेति द्विधा। परम्परितमपि श्लिष्टाश्लिष्टहेतु-

त्वेन द्विधा ॥ तद्द्वयमपि केवलमालारूपत्वेन चतुर्विधमित्यष्टविधं रूपकम् ॥
यत्र सामस्त्येनावयवानामवयविनश्च निरूपणं तत्समस्तवस्तुविषयं यथा—

देदीप्यमानचक्रचर्कप्रतापातप उज्वले ॥
मीलिताक्षा रिपूलूका वनगुल्मगृहे स्थिताः ॥ ५ ॥

अवयवनिरूपणादवयविनो निरूपणं गम्यं यत्र तदेकदेशवर्ति यथा-

अनेकान्तात्मार्थप्रसवफलभारातिविनते ।
वचःपर्णाकीर्णे विपुलनयशाखाशतयुते ॥
सुमुत्तुङ्गे सम्यक्प्रततमतिमूले प्रतिदिनं ।
श्रुतस्कंधे धीमान्रमयतु मनोमर्कटममुम् ॥ ६ ॥

अनेकान्तात्मार्था एव प्रसवफलानीति वचांस्येव पर्णानीति विपुलनया एव शाखा इति प्रसवाद्यवयवकथनात् श्रुतस्कन्धस्य शास्त्रस्य कल्पवृक्षत्वं गम्यत इत्येकदेशवर्तित्वम् ॥ अवयविनिरूपणादेव अर्थसमाप्तिर्यत्र तन्निरवयवम् । अवयवनिरूपणमात्रेऽपि तदेव रूपकम् ॥ तत्र केवलं यथा—

श्रीमद्भरतराजस्य महाज्ञासुमम‌ञ्जरी ॥
अभान्मुकुटबद्धानां मणिराजितमौलिषु ॥ ७ ॥

मालानिरवयवं यथा—

दिङ्मातङ्गसुवर्णचामरततिः कल्पद्रुपुष्पावली ।
खस्य क्षौमवितानमुच्चहिमवच्छृङ्गोत्थगङ्गानदी ॥
श्रीकान्तोरुकटाक्षजालमतुलश्रीभूपमौलिस्रगा- ।
दीशस्यात्मजकीर्तिविस्तृतिरभान्नैर्मल्यगा भूतले ॥ ८ ॥
ब्रह्मक्षिप्तजगत्याधिष्ठितमाणिज्योतिस्ततिर्भूवधू- ।
रागोद्रेकततिश्च दिक्करिलसत्सिन्दूरसान्द्र द्रवः ॥
बाभाच्छेषशिरोमणिद्युतिततिर्भानूरुबालातपः ।
खे कौसुम्भवितानमुल्लसति सत्तेजस्ततिःश्चक्रिणः ॥ ९ ॥

परम्परितं रूपककारणरूपकम् ॥ अस्य रूपकद्वितयमात्रपर्यवसितत्वेन सम-

---

१ लेपः ।

स्तविषयान्तर्भावशङ्का न कर्तव्या ॥ परम्परितं केवलं श्लिष्टं यथा—

पुरोः शास्त्रविधुः कार्यदक्षयुक्तिमहाद्युतिः ॥
स्फारं कुवलयाल्हादं करोति सततं भुवि ॥ ११० ॥

श्लिष्टमालापरम्परितं तु यथा—

सन्मार्गाचरणेन्दुरुद्घकमलाल्हादोष्णभानुर्धरा- ।
भृद्वज्रं सुमनःस्फुटत्वसुरभिर्देवागमास्थानभूः ॥
सत्पद्मामृतवार्धिरिन्दुदितज्योतिर्विराजन्नभो ।
बाभाति स्म विभुः पुरुः कुवलयानन्दैकचन्द्रो भुवि ॥ ११ ॥

सन्मार्गाचरणं रत्नत्रयाचरणं । पक्षे नभःपर्यटनं । प्रशस्तपद्माविकाशी सूर्यः । पक्षे कमला लक्ष्मीः ॥ धराभृतो रिपुभूपाः पर्वताश्च ॥ पुष्पविकाशवसन्तः विद्वदानन्दकामधेनुश्च ॥ देवानां सुराणामागमनस्य सभाभूः । कल्पवृक्षस्थितिभूश्च ॥ पद्मामृते अब्जपीयूषे लक्ष्मीसमुत्पादक्षीरवाराशिश्च ॥ इदु परमैश्वर्ये इन्दन्ति ज्योतींषि चन्द्रादयः । ज्योतिरवधिबोधः राज्यकाले तस्यैव भावात् ॥ कूनां भुवां वलयं उत्पलानि च ॥ अश्लिष्टपरम्परितं केवलं यथा—

युगादिदेवसूर्यस्य दिव्यभाषोरुदीधितिः ॥
सर्वकाष्ठाप्रकाशाय क्षमा मे भातु मानसे ॥ १२ ॥

अथाश्लिष्टमालापरम्परितं यथा—

क्रोधाग्निजलदः श्लिष्टप्रजावाराशिचन्द्रमाः ॥
असत्प्रजान्धकारे नः प्रबभौ चक्रभृद्वरः ॥ १३ ॥

वैसादृश्येनाप्यश्लिष्टमालापरम्परितं भवति ।

मिथ्यात्वातपयामिन्यो मोहध्वान्तोरुवासराः ॥
श्रीमत्समवसृत्याश्रीतादिब्रह्मोक्तिकेलयः ॥ १४ ॥

वाक्यगत्वसमासगत्वाभ्यामेतदष्टविधमपि षोडशविधं स्यात् ॥

पल्लवः पाणिरेतस्याः पादौ पद्मौ मुखं शशी ॥
लोचने कैरवे चेति वाक्यगं रूपकं मतम् ॥ १५ ॥

व्यस्तरूपकमिति चास्य नाम ॥

जिनार्को दिव्यवाग्दीप्त्या भव्यचेतोम्बुजानि वै ॥
सुरेशकोकसंसेव्यो व्यकासयदनुत्तरः ॥ १६ ॥

समासगतमिदं एवं सर्वं योज्यम् ॥ पुनरप्यस्य कश्चिद्विशेषो यथा—

भारतीप्रसरो वक्त्रचन्द्रस्यादिजिनेशिनः ॥
ज्योत्स्नाप्रसर इत्येतत्समस्तव्यस्तरूपकम् ॥ १७ ॥
शोणांगुलिलसत्पत्रनखभाभारकेसरम् ॥
पदाम्बुजं निधीशस्य स्वोत्तमांगे धृतं नृपैः ॥ १८ ॥

सकलरूपकमिदं तत्तद्योग्यस्थानविन्यासात् ॥

लोचनोत्पलमास्यं ते स्मितचन्द्रिकमुज्वलम् ॥
इत्येतयोरयुक्तत्वादयुक्तं रूपकं मतम् ॥ १९ ॥
चलन्नेत्रद्विरेफं ते स्मितपुष्पोच्चयं मुखम् ॥
इति पुष्पालिना योगाद्युक्तरूपकमिष्यते ॥ २० ॥
कामदत्वेन कल्पद्रुर्गिरिर्धैर्येण सौम्यतः ॥
त्वमिन्दुरिति हेतूक्तेर्हेतुरूपकमिष्यते ॥ २१ ॥
नैतदास्यमयं चन्द्रो नाक्षिणी भ्रमराविमौ ॥
इत्यपन्हवपूर्वत्वात् तत्त्वापन्हुतिरूपकम् ॥ २२ ॥
सुभ्रूवल्ली नटी वक्त्रपद्मरंगे तव प्रिये ॥
सलीलं नटतीत्येतन्मतं रूपकरूपकम् ॥ २३ ॥
मुखचन्द्रोऽपि ते कान्ते दन्दहीति च माऽदयः ॥
दोष एष ममैवेति स्यात्समाधानरूपकम् ॥ २४ ॥

इत्यादिबहुभेदं बोद्धव्यम् ॥

आरोपविषयत्वेनारोप्यं यत्रोपयोगि च ॥
प्रकृते परिणामोऽसौ द्विधैकार्थेतरत्वतः ॥ २५ ॥

आरोप्यं प्रकृतोपयोगीत्यनेन सर्वेभ्योऽलङ्कारेभ्यो वैलक्षण्यमस्य ॥ स द्विधा सामानाधिकरण्यवैयधिकरण्याभ्याम् ॥ क्रमेण द्वयं यथा—

सुधां सर्वे जिनेशस्य दिव्यभाषामयीं सुराः ॥
सदा सुखगतस्वान्ताः सेवन्ते पुरुतोषतः ॥ २६ ॥

अत्रारोपविषयाया दिव्यध्वनिरूपेणारोप्यमाणायाः सुधायाः सामामाधिकरण्येन परिणामः ॥

सुराः किरीटरत्नांशुनिवहेन जिनेशिनः ॥
पुष्पाञ्जलिं विधायाशु प्रणमन्ति पदद्वयम् ॥ २७ ॥

अत्र आरोपविषयकुसुमाञ्जलिरूपेणारोप्यमकुटमण्यंशुगणस्य वैयधिकरण्येन परिणतिः ॥ समासोक्तेरारोप्यस्य प्रकृतोपयोगित्वेऽप्यवाच्यत्वान्नान्तर्भावः परिणामे ॥

स्यातां विषयतद्वन्तौ सन्देहविषयौ कवेः ॥
सादृश्यात्सन्मतायत्र सन्देहालंकृतिर्मता ॥ २८ ॥
शुद्धा निश्चयगर्भा च निश्चयान्त्येति सा त्रिधा ॥
शुद्धा यथा च सन्देहमात्रपर्यवसायिनी ॥ २९ ॥

*किमेष सिन्धुः परमो गभीरः । किमेष कल्पद्रुरभीष्टदायी ॥*
किमेष मेरुः कनकाङ्गरम्यः । प्रजाभिरित्थं स पुरुः सुदृष्टः ॥ १३० ॥

निश्चयगर्भा यथा—

श्रीचन्द्रःकिमिदं मलीमसमसौ धत्ते कलंकं पुनः ।
श्रीपद्मं किमिदं दिवैव विचकं बोभाति चैतत्पुनः ॥
किं प्रद्युम्नकरस्थदर्पणमिदं सोऽपि स्थितो नीरस ।
इत्येवं सुविकल्पितं प्रियवधूवक्त्रं सखीभिः प्रभोः ॥ ३१ ॥

निश्चयान्ता यथा—

एते शारदचन्द्रनिर्मलकराः किं श्रीह्रदः शुद्धयः ।
किं पीयूषरयाः सुरद्रुमलसत्पुष्पस्रजः किं पुरोः ॥
किं कारुण्यरसा इति स्वकहृदि व्यामृश्य सन्तश्चिरं ।
व्याहारा जिनशिक्षका इति विभोर्निश्चिन्वते स्म स्फुटम् ॥ ३२ ॥

पिहितात्मनि चारोपविषये सदृशत्वतः ॥

आरोप्यानुभवो यत्र भ्रान्तिमान्स मतो यथा ॥ ३३ ॥

चन्द्रप्रभं नौमि यदङ्गकान्ति ज्योत्स्नेति मत्वा द्रवतीन्दुकान्तः ॥

चकोरयूथं पिबति स्फुटन्ति कृष्णेऽपि पक्षे किल कैरवाणि ॥ ३४ ॥

अत्रारोपविषये जिनांगकांतौ चकोरादीनां ज्योत्स्नानुभवः ॥

इदं न स्यादिदं स्यादित्येषा साम्यादपह्नुतिः ॥

आरोप्यापन्हवारोपच्छलाद्युक्तिभिदा त्रिधा ॥ ३५ ॥

आरोप्यापन्हवः अपन्हवारोपः छलादिशब्दैरसत्यत्ववचनं चेति त्रिधा सा ॥

आद्यद्वयं यथा—

नायं वायुसमुत्थिताम्बुधिमहानिर्घोषकोलाहलः ।

श्रीयाधीशसभासुरप्रहतसझेरीनिनादो महान् ॥

नायं ब्रह्मसभासुरप्रहतसद्भेरीविराजध्द्वनिः ।

श्रीवायूत्थितसारवारिधिमहानिर्घोषकोलाहलः ॥ ३६ ॥

अन्तिमं यथा—

पुरोः सुपार्श्वयुग्मेऽभूत्पुष्पवृष्टिच्छलाद्बराः ॥

मुक्तिलक्ष्मीकटाक्षाः श्रीधवलीकृतदिङ्मुखाः ॥ ३७ ॥

एकस्य शेषरुच्यर्थयोगैरुल्लेखनं बहु ॥

ग्रहीतृभेदादुल्लेखालंकारः स मतो यथा ॥ ३८ ॥

लक्ष्मीगृहमीति प्राज्ञा ब्राह्मी पदमिति प्रजाः ॥

कलाखनिरिति प्रीताः स्तुवन्ति सुपुरोः पुरीम् ॥ ३९ ॥

अत्र रुच्यर्थयोगाभ्यामुल्लेखः ॥ श्लेषेण यथा—

जिष्णू रिपौ वैरिरणेषु भीमः ।

कलासु राजा कमलातिहृष्टौ ॥

इनोऽचलेशो भुवि भूमिभृत्सु ।

इति स्तुवन्ति स्म नृपं कवीन्द्राः ॥ १४० ॥

उल्लिखन्ति स्वस्वभावनया आरोपयन्ति बहूनि रूपाण्यस्मिन्नित्युल्लेखः ॥ अध्यवसायगर्भालंकृतिद्वयं यथा ॥ अध्यवसायो नाम विषयविषयिणोरन्य-

तरनिगरणाद्भेदानिश्चयः ॥

यत्राप्रकृतसन्बन्धात्प्रकृतस्योपतर्कणम् ॥
अन्यत्वेन विधीयेत सोत्प्रेक्षा कविनोदि.।॥ ४१ ॥

अप्रकृतगुणक्रियासम्बन्धात्प्रकृतस्याप्रकृतत्वेनारोपणं यत्र सोत्प्रेक्षा ॥ अतथ्यं तथ्यप्रतिभासयोग्यमुत्प्रेक्षन्ते उद्भावयन्त्यस्यामिति उत्प्रेक्षा ॥ वाच्या गम्यमाना चेति सा च द्विधा ॥ विज्ञः मन्ये नूनं प्रायः इत्यादीनामारोपणप्रतिपादकानां प्रयोगे वाच्या । प्रयोगस्य प्रतीयमानत्वात् ॥

सम्प्रत्यपापाः स्म इति प्रतीत्यै ।
वन्हाविवान्हाय मिथः प्रविष्टाः ॥
यत्कायकान्तौ कनकोज्वलायां ।
सुरा विरेजुस्तमुपैमि शांतिम् ॥ ४२ ॥

वन्हाविवेति कविप्रौढिकल्पितत्वान्नोपमाशङ्का ॥ तदुक्तं--

कल्पना काचिदौचित्याद्यत्रार्थस्य सतोऽन्यथा ॥
द्योतितेवादिभिः शब्दैरुत्प्रेक्षा सा स्मृता यथेति ॥

उत्प्रेक्षा बहुविधा संक्षिप्ता ग्रन्थविस्तारभीरुत्वात् । अत एव सर्वत्र संक्षेपः ॥ अस्याल्पप्रपंचो यथा—

इयं जातिफलोत्प्रेक्षा नूनं चक्रिभुजद्वयम् ॥
षट्खण्डपृथिवीहर्तुस्तम्भीभवितुमायतम् ॥ ४३ ॥

अत्र स्तम्भस्य जातित्वेन स्तम्भीभवितुमिति जातेः फलत्वम् ॥

जात्यभावफलोत्प्रेक्षा सेयं चक्रेशवैरिणः ॥
गावोऽवध्या इति प्रापुरनृत्वाय तदाकृतिम्[1] ॥ ४४ ॥

नृत्वं मनुष्यत्वजातिः अनृत्वायेति जात्यभावस्यफलत्वम् ॥

क्रियास्वरूपगोत्प्रेक्षा सेयं चक्रेशवैरिणाम् ॥
मरुभूरस्तगुल्मादिर्निवासं प्रददाति वा ॥ ४५ ॥

अत्र प्रददातीति क्रियास्वरूपमुत्प्रेक्ष्यम् ॥

---

१ तदाकृतिमित्यत्र तृणादनमिति पाठान्तरम् ॥

क्रियास्वरूपहोत्प्रेक्षा विमुखे चक्रिणि द्विषः ॥
वनमप्यददत्स्थानं शिरः कर्षति कण्टकैः ॥ ४६ ॥

अत्र अददादित्यत्र क्रियास्वरूपस्य हा हानं अभाव इत्यर्थः ॥

क्रियाहेतुर्यथोत्प्रेक्षा प्रत्यहं द्विट्मदांकुराः ॥
म्लानाश्चक्रिप्रतापार्कतीव्रोष्माभिहतेरिव ॥ ४७ ॥

अत्र अभिहतेरिति क्रियाहेतुत्वम् ॥

यथा क्रियाफलोत्प्रेक्षा चक्रियानानकध्वनिः ॥
अन्वेष्टुं वा रिपून्लीनान्गुहामध्यं विगाहते ॥ ४८ ॥

अन्वेष्टुं वेति क्रियायाः फलत्वम् ॥

क्रियाभावफलोत्प्रेक्षा तेजोदग्धे भुवां स्थले ॥
आस्थातुमिव चक्रीशद्विषो लोकान्तरं गताः ॥ ४९ ॥

अत्रास्थातुमिवेति क्रियाभावस्य फलत्वम् ॥

गुणस्वरूपगोत्प्रेक्षा वक्तुरास्याद्गणेशिनः ॥
कृपया प्रसृता वाणी स्वशुद्धिरिव मूर्तिगा ॥ १५० ॥

अत्र शुद्धिर्बोधसम्यक्त्वरूपोगुणः ॥

कविप्रौढगिरा यत्र विषयी सुविरच्यते ॥
विषयस्य तिरोधानात्सास्यादतिशयोक्तिता ॥ ५१ ॥
भेदे भेदस्त्वभेदे तु भेदः सम्बन्धके पुनः ॥
असम्बन्धस्त्वसम्बन्धे सम्बन्धस्सा चतुर्विधा ॥ ५२ ॥

तत्र भेदे अभेदो यथा—

इक्ष्वाकुकुलवारीशौ बभूव शिशिरद्युतिः ॥
महालक्ष्मीपतिः सोऽयं चित्रं श्लाघ्यतरो भुवि ॥ ५३ ॥

भरतचक्रिचन्द्रयोरभेदाध्यवसायः लक्ष्मीचन्द्रयोः सोदरत्वेऽपि पतित्वप्रतिपादनाच्चित्रत्वम् ॥

श्रद्धाऽन्याऽन्या तु विद्या समितिरपि परा गुप्तिरन्या तपोन्य ।
स्साऽनुप्रेक्षाऽपि भिन्ना चरितमपि परं स्युर्दशान्येऽपि धर्माः ॥

नित्याश्लेषोत्थसौख्यमदपरमवधूसङ्गसम्पादने श्री- ।
ध्यानेनाधीश्वरस्य त्रिजगति कलिता का नु सामग्र्यतीद्धा ॥५४॥

श्रद्धादेरभेदेऽपि भेदकल्पना एकस्यैव च अतिशयकथनाय भेदवचनात् स्वतः शब्दभेदे सिद्धेऽपि अभेदाध्यवसायः ॥

चिन्तारत्नं दृषदिह तरुः कल्पवृक्षोऽपि काम- ।
धेनुः साक्षात्पशुरपि जगद्दोषयुक्तं च दृष्टम् ॥
वैधी सृष्टिश्चतुरवयवा सार्वभौमं स्पृशेत् किं ।
लोकानन्दीप्रथमपुरुषं रूपकं दर्पदेवम् ॥ ५५ ॥

कविसङ्केतेन विधिसृष्टिसम्बन्धेऽप्यसम्बन्धः अतिशयितब्रह्मसृष्टिना प्रथमपुरुषेणाधीशेन चक्रिणः अभेदाध्यवसायः ॥

श्रीशक्रः शतमन्युराश्रितवपुर्दाह्यग्निरप्यन्तको ।
बालादेरपि घातकोऽपि निर्ऋतिः स्याद्राक्षसः प्राप्तवान् ॥
पाश्याशामपि वारुणीं चलगतिर्वायुः कुबेरो भवो ।
लुब्धो भैक्ष्यभुगित्यजेन हरितां पाताऽऽदिमः स्थापितः ॥५६ ॥

अष्टदिक्षु तत्पालसम्बन्धेप्यसम्बन्धः आदिमस्य तत्पालनासम्बन्ध उक्तः ॥ अतिशयितदिक्पालवृत्तिनाऽऽधीशेनाभेदाध्यवसायश्चक्रिणः ॥ असम्बन्धे सम्बन्धो यथा ॥

उद्वाहे वरसार्वभौमसुरसाऽऽक्रान्ताजनोद्घाश्रियोः ।
सर्वाधोवनिचञ्चदूरुतदधःपर्वाङ्घ्रिविस्तारकः ॥
तिर्यक्क्षेत्रकटिस्तदूर्ध्वसदुरा ब्रह्मान्तदिग्बाहुकः ।
श्रीग्रैवेयकसिद्धभूगलशिरा लोकोऽनया नृत्तवान् ॥ ५७ ॥

अत्र चक्रिभूकान्ताविवाहससैकपंचैकरज्जुप्रमितलोकनटताण्डवयोरसम्बन्धे सम्बन्धः ॥ अत्र सार्वभौमेन कुबेरदिग्गजेन निधीशस्याभेदाध्यवसायः ॥ शोभनरसया अञ्जनया कुबेरदिक्करिण्या रसाश्रियः भूश्रियश्च ॥ अन्यदपि--

आदिब्रह्मन्कृते किं त्रिजगति भवतो नो मुदे देव सत्यं ।
सृष्टिस्ते स्यात्तु तुष्टै नृपवर सफला यन्निधीशः कृतोऽरम् ॥

किं मिथ्या श्लाघसे त्वं सकलमुरुजगत्त्रातुमिन्द्रोऽवतीर्णो ।
गोराहूतो मयेति स्वजनि वरकथाऽऽदीशनागेशयोस्सा ॥ ५८ ॥

अत्र आदीशनागराजयोरेवंविधकथासम्बन्धेऽपि सम्बन्ध उक्तः ॥ इन्द्रेण चक्रिणोऽभेदाध्यवसायः ॥ कार्यकारणयोर्विपरीतरूपाध्यवसायरूपत्वाभावेन भिन्नाऽपि प्रौढोक्त्याऽतिशयोक्तिरिष्यते ॥ सा यथा—

कथं प्राग्भो निधीट्दृष्टेः शराः स्माराः पतन्त्यमी ॥
स्मरोऽप्यस्य सुरूपेण जितस्तत्किङ्करोऽभवत् ॥ ५९ ॥

कार्यभूतस्य स्मरशरपातस्य हेतुभूतात्प्रियावलोकनादुक्तम् । पूर्वकालत्वमिति पौर्वापर्यकृतं विपरीतत्वम् ॥ उक्तिसाम्यालङ्कारप्रस्तावे अतिशयोक्तिहेतुका सहोक्तिः कथ्यते– –

यत्रान्वयः सहार्थेन प्रोच्यतेऽतिशयोक्तितः ॥
औपम्यकल्पनायोग्या सहोक्तिरिति कथ्यते ॥ ६० ॥

यत्रैकस्य प्राधान्येनान्वये सत्यन्यस्य सहार्थेनान्वयेऽतिशयोक्त्या उपमानोपमेयत्वं परिकल्प्यते सा सहोक्तिः ॥ कार्यकारणपौर्वापर्यविपर्ययरूपातिशयोक्तिमूला अभेदरूपातिशयोक्तिश्लेषगर्भा चारुत्वातिशयहेतुरिति सा द्विधा ॥ क्रमेण यथा—

चक्रेशगुह्योरुभटप्रयुक्तकृपाणधारा रिपुमस्तकेषु ॥
पतन्ति साकं सुरचारुनारीकरप्रमुक्तोरुसुमप्रतानैः ॥ ६१ ॥

अत्रासिपातोत्तरकालभाविनोऽमरसुमव्रजपातस्य समकालत्वमिति पौर्वापर्यविपर्ययः ॥

तेजोलक्ष्मीर्निधीशस्य प्रतिवासरमृच्छति ॥
उदयं द्योतिताशेषदिगन्ता मनुना सह ॥ ६२ ॥

उदयमृच्छतीति श्लेषेणोदयाद्यभ्युदयस्याभेदो निश्चितः ॥ सहोक्तिप्रतिपक्षभूता विनोक्तिरुच्यते—

असन्निधानतो यत्र कस्यचिद्वस्तुनो परम् ॥
वस्तु रम्यमरम्यं वा सा विनोक्तिरिति द्विधा ॥ ६३ ॥

अरम्यता यथा—

सम्यक्त्वव्रतशुद्धस्य विनोरुगुणवर्णनाम् ॥
क्लृप्तिः काव्यस्य कीदृक्षा शृण्वन्तु कविकुञ्जराः ॥ ६४ ॥

व्रतेन वा सम्यक्त्वेन वा भद्रपरिणामेन वा शुद्धस्य गुणवर्णनया विना काव्यसम्पदोऽशोभनत्वम् ॥ एतेन काव्यशोभामिच्छता कविना तादृशस्य राज्ञो गुणा वर्णनीया इति विधिरेव द्योतितः ॥ रम्यता यथा—

प्रकाशमाने भरताधिनाथे विना कलंकेन सुलक्ष्मभाजि ॥
कलाप्रपूर्णे जगति प्रसन्ने नभःस्थितोऽपीन्दुरभून्मनोज्ञः ॥ ६५ ॥

चक्रिणि प्रकाशमाने शशिनः कलंकेन विना रम्यता ॥

प्रस्तुतं वर्ण्यते यत्र विशेषणसुसाम्यतः ॥
अप्रस्तुतं प्रतीयेत सा समासोक्तिरिष्यते ॥ ६६ ॥

श्लिष्टविशेषणसाम्या साधारणविशेषणसाम्या चेति द्विधा ॥ क्रमेण यथा—

चक्रिदत्तगुणारूढधर्मयुक्तसुखगश्रिया ॥
आलिंगितोऽरिवर्गोऽगाद्भावं कमपि चेतसि ॥ ६७ ॥

विभ्रमविलासशीलादिगुणस्वभावयुक्तसौख्यप्रापणलक्ष्म्याश्लिष्टाः रिपवः स्वेदानंदाश्रुदृष्टिनिमीलनादिभावमगुरित्यप्रस्तुतं मौर्व्यारूढधनुःप्रयुक्तशोभनबाणश्रिया शतच्छिद्रीकृतांगा मूर्च्छादिभावमगुरिति प्रस्तुतोक्त्या प्रतीयते ॥

व्रीडानिद्राभिमानच्युतिगलल्पनादीक्षितस्वेदबिन्दु-।
श्लिष्टांगं स्रस्तसर्वाभरणवरमहावस्त्रमाकम्पितांगम् ॥
निर्यद्बाष्पाम्बुभाषास्खलनयुतिमहार्भाभिरालिंगितास्ते ।
सद्घोषाघुट्टनं श्रीनिधिपतिबलतस्तर्जिता रेमिरेऽरम् ॥ ६८ ॥

अत्र शृंगारभयानकसाधारणविशेषणबलादरीणां नायकत्वप्रतीतिः ॥ समासोक्तौ द्वयोर्विशेषणविशेष्ययोः स्वीकाराभावात् श्लेषाभेदः ॥ इयमपि समासोक्तिः—

मन्दं यातुं गृहीतुं कचमधरसुधां पातुमामोदमाशु ॥
घ्रातुं वक्षो विधातुं स्वभुजशुभमहापञ्जरे चाटु वक्तुम् ॥

अन्यां वृत्तिं च कर्तुं समरत पतिना षण्ड तस्मिन्मृगाक्ष्या ।
बन्धावर्ते सुमग्ने रतसुखजलधौ स्थीयते किंनु तूष्णीम् ॥ ६९ ॥

उक्तं च— उच्यते वक्तुमिष्टस्य प्रतीतिजननक्षमम् ॥
सधर्मं यत्र वस्त्वन्यत्समासोक्तिरियं यथेति ॥
अन्यथोदितवाक्यस्य काक्वा वाच्यावलम्बनात् ॥
अन्यथा योजनं यत्सा वक्रोक्तिरिति कथ्यते ॥ ७० ॥
आसक्तो निर्भरत्वेन श्रियां मे वल्लभः सखि ॥
अम्ब न्यूना श्रियोऽपि त्वं किं करोषि लघुं स्वकाम् ॥ ७१ ॥

त्वमपि श्रियः सकाशात् न्यूना न भवसि अतस्त्वय्यपि पतिरासक्त एव किमिति स्वकां लघुं करोषीति काक्वा प्रतीतिः ॥

स्वभावमात्रार्थपदप्रक्लृप्तिः । सा या स्वभावोक्तिरियं हि जातिः ॥
जातिक्रियाद्रव्यगुणप्रभेदा । नीचांगनात्रस्तसुताधिरम्या ॥ ७२ ॥
अङ्गना प्रावृडारम्भे वनक्रीडापरायणा ॥
घनाघनध्वनेर्भीताऽऽलिलिङ्गात्मपतिं दृढम् ॥ ७३ ॥
हुंभारवं वितन्वानाः कुर्वाणा वल्गनं गवाम् ॥
पुरो वत्सास्सुपृष्ठाङ्गा गोकुले भान्ति चारवः ॥ ७४ ॥
यत्र प्रकाशितं वस्तु साम्यगर्भस्वतः पुनः ॥
कुतोऽपि च्छाद्यते व्याजात् सा व्याजोक्तिरितीष्यते ॥ ७५ ॥

श्रीभूमिपाणिग्रहकालजात- । रोमाञ्चवृन्दे सति चक्रचुदात्तः ॥
राजाऽभिषिक्ताम्बुकणव्रजः किं । कर्तव्य इत्यैक्षत मन्त्रिवर्गम् ॥ ७६ ॥

भूमिपाणिग्रहजनितं रोमहर्षणं धीरोदात्ततया भरतचक्रिणा महाभिषेकाम्बुकणव्याजेन प्रच्छादयता मन्त्रिणो वीक्षिताः ॥ व्याजोक्त्या किञ्चित्साम्यान्मीलनं कथ्यते—

वस्तुना मीलनं यत्र प्रच्छाद्येतान्यवस्तुवत् ॥
सहजागन्तुकाभ्यां तत्तिरोधानान्मिथो द्विधा ॥ ७७ ॥

वस्तुना वस्त्वन्तरं यत्र प्रच्छादितं स मीलनालङ्कारः ॥ स द्वेधा सहजेनाग-

न्तुकतिरोधानं आगंतुकेन सहजतिरोधानं चेति ॥ क्रमेण यथा—

श्रीमद्दिग्विजयाभिमुख्यवति सच्चक्रेश्वरे शत्रुषु ।
क्वापि त्रस्तवपुष्षु लीनतनुषु प्रध्वानकैर्दुन्दुभैः ॥
गम्भीरैः परिगर्जितेषु जनिताः कामज्वरालिङ्गिताः ।
शत्रूणामरुजोष्णतां न च विदन्त्यङ्गेषु लग्नामपि ॥ ७८ ॥

सहजेन रिपुवधूगतेन स्मरानलौष्ण्येन मार्गवशादागन्तुकं मरुभूमिजातोष्णत्वं तिरोहितम् ॥

श्रीमच्चक्रेश्वरस्य प्रथितभुजमहातेजसाऽन्तर्भयानां ।
नित्यं स्वेदाश्रुकम्पाद्युपचयमपि सत्कामगोष्ठ्यां प्रजातम् ॥
प्रेम्णोद्भूतं भवेदित्यवधृतमतितो विश्वसन्ति स्म नारम् ॥
काम्याकृष्टिक्षमश्रीहसितयुतगुणश्रीकटाक्षा वधूट्यः ॥ ७९ ॥

भयजातेन स्वेदादिना आगन्तुकेन सहजं प्रेमजातं स्वेदादिकं तिरोहितम् ।

वस्त्वन्तरैकरूपत्वं सामान्यालंकृतिर्यथा ॥ ८० ॥

भरतयशसि लोके जृम्भमाणेऽतिशुभ्रे ।
शशधररजताद्रिक्षीरवारोशिमुख्ये ॥
भुवि जनततिरीक्ष्याऽदृश्यमानेऽद्भुताढ्या ।
प्रमदसुलपितास्याऽन्योऽन्यमस्थादतीद्धा ॥ ८१ ॥

यशसि जृम्भिते सति शशिप्रभृतीनां निर्मलवस्तूनां गुणसाम्येन तदैकात्म्यम् । अन्यगुणसन्निधानातिशयसाम्यात्तद्गुणः कथ्यते—

विहाय स्वगुणं न्यूनं सन्निधिस्थितवस्तुनः ॥
यत्रोत्कृष्टगुणादानं तद्गुणालंकृतिर्यथा ॥ ८२ ॥

जिनांघ्रिनखरुक्चान्द्या नम्रत्रिदशमौलयः ॥
पद्मरागमणिद्योताः शुभ्रिमाढ्यतमीकृताः ॥ ८३ ॥

तत्प्रतिपक्षोऽतद्गुण उच्यते ॥

यत्र सन्निधिरूपे तु हेतौ सत्यपि वस्तुनः ॥
नेतरस्य गुणादानं सोऽलंकारो ह्यतद्गुणः ॥ ८४ ॥

आदीशबाहुबल्यङ्गस्वर्णगारुत्मतत्विषा ॥
लोके किं मीलिते चक्रिकीर्तिः शौक्ल्यं न चात्यजत् ॥ ८५ ॥(?)

पुरुजिनस्य भुजबलिकेवलिनश्च कायप्रभाशबलिते जगति सर्वत्र व्याप्तस्य चक्रियशसः स्वकीय एव धवलिमा जृम्भितः ॥ विरोधस्यातद्गुणेन किञ्चित्सारूप्यत्वाद्विरोध उच्यते ॥

यत्राभासतया पूर्वं विरुद्धत्वं प्रतीयते ॥
परिन्हीयेत पर्यन्ते विरोधालंकृतिर्यथा ॥ ८६ ॥
चतुस्त्रिद्व्येकजात्याद्यै स्तद्भेदाश्चतुरादयः ॥
जातिक्रियागुणद्रव्याविरोधे क्रमतो दश ॥ ८७ ॥

जातेर्जातिक्रियागुणद्रव्यैर्विरोधे चत्वारो भेदाः । क्रियायाः क्रियागुणद्रव्यैर्विरोधे त्रयो भेदाः ॥ गुणस्य गुणद्रव्याभ्यां सह विरोधे द्वौ भेदौ । द्रव्यस्य द्रव्येण सार्धं विरोधे चैको भेदः ॥ एवं विरोधभेदा दश ॥

पद्माकरोऽपि चक्रेशो जडाशय इति स्तुतः ॥
जातेर्जात्या विरोधोऽयं श्लेषेणेति निरूपितः ॥ ८८ ॥
धीवरोऽपि न मीनादेर्बाधाकारी निधीश्वरः ॥
जातेः क्रियाविरोधोऽयं श्लेषेणेति निरूपितः ॥ ८९ ॥
धीवरोऽपि रथांगेशः स्यादज्ञानीति नोदितः ॥
जातेर्गुणविरोधोऽयं श्लेषेणेति निरूपितः ॥ ९० ॥
रत्नाकरोऽपि सन्मार्गो भरताह्वयचक्रभृत् ॥
जातेर्द्रव्यविरोधोऽयं श्लेषेणेति निरूपितः ॥ ९१ ॥

सन्मार्गस्य गगनस्यैकत्वेन द्रव्यत्वं कथञ्चित् ॥

तत्त्वं सत्त्वादिना येन नैकेनाप्यवधारितम् ॥
तद्वित्तथाप्यसावेव स सुपार्श्वोऽस्तु मे गुरुः ॥ ९२ ॥

सत्त्वादिना अस्तित्वनास्तित्वादिना धर्मेण एकेनापि नावधारितं किञ्चिदपि न ज्ञातं तथापि तत्त्ववेदी सर्वथास्तित्वादिना न वेत्ति कथंचिदस्तित्वादिना जानातीति परिहारः ॥ अनिश्चयक्रियाया विरोधः ॥

विबुधेशविहारोऽपि गोत्रवात्सल्यमण्डितः ॥
क्रियायास्तु गुणेनात्र विरोधः श्लेषतो मतः ॥ ९३ ॥

इन्द्रविहारस्य पर्वतवात्सल्यमिति क्रियागुणयोर्विरोधः ॥ विबुधानां विदुषामीशोऽभीष्टदायी चक्री ॥

विकासमपि पद्मानां कुर्वन् राजा निधीश्वरः ॥
द्रव्येणात्र क्रियायास्तु विरोधः श्लेषतो मतः ॥ ९४ ॥

चन्द्रस्य परमतापेक्षयैकत्वे न द्रव्यत्वं ॥

रञ्जिताऽपि त्वया राजन् भूमिः शुभ्रा बभूव भोः ॥
गुणेनात्र गुणस्यास्ति विरोधः कविसम्मतः ॥ ९५ ॥

रक्तत्वशुभ्रत्वयोर्विरोधः ॥

वेपप्रतापयुक्तोऽपि कलानिधिरितिस्तुतः ॥
द्रव्येणात्र गुणस्यास्ति विरोधः कविभाषितः ॥ ९६ ॥
धर्मराजोऽपि चक्रेशो राजराज इति स्तुतः ॥
द्रव्येणात्र विरोधोऽस्ति द्रव्यस्य श्लेषतः स्फुटम् ॥ ९७ ॥

एवं दशधा विरोधो दर्शितः श्लेषाश्लेषाभ्यां च विचारणीयः ॥ अथ विरोधगर्भालंकृतयः कथ्यन्ते ॥ आधारं विना यत्राधेयं विरच्यते स एको विशेषः । एकमनेकविषयमिति द्वितीयो विशेषः ॥ प्रकृतस्याशक्यवस्त्वन्तरकरणमिति तृतीय इति विशेषालंकारस्त्रिधा ॥ क्रमेणोच्यते ॥

आधाररहिताधेयविशेषालंकृतिर्यथा ॥
पुरुभाषाश्रिता मैत्री वाभाच्चाक्रिगिरा चिरम् ॥ ९८ ॥

अतादीशस्य प्राचीनस्याधारभूतस्य परममुक्तिं गतस्य तिरोधानेऽप्याश्रिताया उक्तेरुत्तरकालवर्तिचक्रिभाषया सह स्थितिः ॥

एकस्यानेकधात्वे तु विशेषालंकृतिर्यथा ॥
चक्र्यालोकेन सर्वत्र धावन्तिस्मारयो भयात् ॥ ९९ ॥

अत्र भयभ्रान्तानामरीणां सर्वत्र पुरोभागे पश्चाद्भागे पार्श्वयोरपि गृहस्य बहिरन्तर्वा धृतखड्गभरतेशदर्शनाद्धावनमिति एकोऽपि चक्री अनेकः प्रतीयते ।

अशक्यवस्तुनिष्पत्तिर्विशेषालंकृतिर्यथा ॥
चक्रिदृष्टः सुरेन्द्रोऽपि कृतार्थः किं जनः परः ॥ २०० ॥

चक्रिणः कृपाकोमलदृष्टिनिरीक्षितः शक्रोऽपि कृतार्थः । साधारणजनस्तत्प्रसाददृष्टः किन्न प्राप्नोतीति अशक्यवस्त्वन्तरकरणम् ॥

आधाराधेयवैचित्र्येणाधिकालंकृतिर्यथा ॥
यत्र नास्त्यनुरूपत्वमाधाराधेययोर्मता ॥ १ ॥
अधिकालंकृतिर्द्वेधा साधाराल्पबहुत्वतः ॥

ऊर्ध्वाधोमध्यभेदत्रिभुवनभीरता कीर्तिरादीशसूनोः ।
स्वैरक्रीडां विधातुं निकुचिततनुका गूढमूर्त्या प्रवृत्ता ॥
इन्दुव्योमापगाश्रीहिमवदुरुगिरिक्षीरवाराशिमुख्यै- ।
स्तत्सान्द्रीभावरूपैः प्रकटिततनुका मध्यलोके रराजे ॥ २ ॥

अत्राधारस्य भूम्याकाशजठरस्याल्पत्वं आधेयस्य चक्रियशसो विपुलत्वम् ॥

प्राच्योदीच्याः प्रतीच्याः स्वहितनृपतयो दाक्षिणात्याश्च सर्वे ।
हस्त्यश्वादिस्वसेनाविभवगणसमाक्रान्तकाष्ठान्तरालाः ॥
निर्मर्यादे बले श्रीभरतनिधिपतेः क्षीरसिन्धूयमाने ।
लीनाः पूर्णत्वमापुर्न च बलजलधेरल्पकोणेऽपि चित्रम् ॥ ३ ॥

आधारस्य चक्रिसेनाब्धेर्वैपुल्यमाधेयानां प्राच्यादिराजसेनानामल्पत्वम् ॥

प्रसिद्धकारणाभावे कार्योत्पत्तिर्विभावना ॥
विशेषोक्तिस्तु सामग्र्यां सत्यां कार्यस्य नोद्भवः ॥ ४ ॥
चक्रिनिर्जितशत्रूणामुत्पेदेऽरात्रिकं तमः ॥
दिवसेष्वपि तेजांसि नोद्बभूवुस्तरां तदा ॥ ५ ॥

तिमिरोत्पादस्य प्रसिद्धस्य कारणं रात्रिः तदभावेऽपि तदुत्पत्तिरुक्ता अप्रसिद्धहेतुना भीतिशोकादिना दिङ्मूढत्वादिरूपस्य तमसः सद्भावात् । दिवसे किरणानां बाहुल्येऽपि तेजसामनुत्पाद इति विशेषोक्तिः । अत्रापि कोशदण्डधैर्यादिविरहोऽप्रसिद्धो हेतुस्तस्यैव ॥ कार्यकारणविरोधप्रस्तुतेरसंगतिरुच्यते—

कार्यकारणयोरेकदेशसंवर्तिनोरपि ॥
भिन्नदेशस्थितिर्यत्र तत्रासङ्गत्यलंकृतिः ॥ ६ ॥
धुर्ये चक्रिणि षट्खण्डभारं वहति भूभुजि ॥
राजानः शमितात्मानो बभूवुर्नतमौलयः ॥ ७ ॥

भारमन्यस्मिन्नधीशे बिभ्रति सति तदन्येषु रिपुषु नमनमिति ॥ विरोधप्रस्तुतेर्विचित्रमुच्यते—

स्वविरुद्धफलाप्त्यर्थमुद्योगो यत्र तन्यते ॥
विचित्रालंकृतिं प्राहुस्तां विचित्रविदो यथा ॥ ८ ॥
पुरोरग्रे त्रिलोकेशा मुमुचुः सम्पदोऽखिलाः ॥
सुनिर्बाधनमादातुमखिलाः सम्पदोऽनिशम् ॥ ९ ॥

अत्रादातुं त्यजन्तिस्मेति विपरीतफलप्राप्त्यर्थः प्रयत्नः ॥ विरोधमूलत्वादन्योन्यस्यान्योन्यं कथ्यते—

परस्परक्रियाद्वारमुत्पाद्योत्पादकत्वकम् ॥
यत्र सूरिभिरुक्ता सावन्योन्यालङ्कृतिर्यथा ॥ २१० ॥
पुरुणाऽऽरोहता मेरुं सिंहासनमलङ्कृतम् ॥
नानारत्नभृता तेन पुरुरापाधिकां श्रियम् ॥ ११ ॥

जन्माभिषेकावसरे आरोहता नाभिशिशुना हेममयवपुषा सिंहासनं भूषितं तेनायमिति पुरुपीठयोरन्योन्यभूष्यभूषकत्वम् ॥ विरोधमूलं विषमं निरूप्यते—

हेतोर्विरुद्धकार्यस्य यत्रानर्थस्य चोद्भवः ॥
विरूपघटना त्रेधा विषमालंकृतिर्यथा ॥ १२ ॥
कालोरगाभखड्गेन कीर्तिर्गंगोपमोदभूत् ॥
जयाशाऽऽस्तां द्विषो युद्धे चकचालोकात्पतन्त्यगी ॥ १३ ॥

नीलवर्णायुधेन गंगाशुभ्रं यशो जातमिति कारणाद्विरुद्धकार्योत्पत्तिरित्येका विषमालंकृतिः ॥ न केवलस्य रणोद्योगफलस्य जयस्य अनुत्पत्तिः किन्तु प्राणनाशरूपस्यानर्थस्योत्पत्तिरपीत्यकार्यभूतस्यानर्थस्योद्भवे द्वितीयं विषमम् ॥

निःशेषत्रिदशेन्द्रशेखरशिखारत्नप्रदीपावलि- ।

सान्द्रीभूतमृगेन्द्रविष्टरतटीमाणिक्यदीपावली ॥
केयं श्रीः क्व च निस्पृहत्वमिदमित्यूहातिगस्तादृशः ।
सर्वज्ञानदृशश्चरित्रमहिमा लोकेशलोकोत्तरः ॥ १४ ॥

सस्पृहत्वयोग्यायाः श्रियो निस्पृहत्वस्य घटनमिति विरूपयोर्वस्तुनोस्संघट्टने तृतीयं विषमम् ॥

यत्रान्योऽन्यानुरूपाणामर्थानां घटना समम् ॥
सुभद्रा भरतेशस्य लक्ष्म्या सममभूद्वरा ॥ १५ ॥

लक्ष्मीसुभद्रादेव्योरनुरूपयोर्योग इति समालंकारः ॥ विषमपर्यन्तं विरोधगर्भालंकारा दर्शिताः ॥ विषमवैसादृश्यात्सममुक्तम् ॥ इदानीं गम्यमानौपम्यालंकारा उच्यन्ते ॥

केवलप्रस्तुतान्येषामर्थानां समधर्मतः ॥
यत्रौपम्यं प्रतीयेत भवेत्सा तुल्ययोगिता ॥ १६ ॥

केवलप्रकरणिकाणां यथा—

भरते सिंहपीठस्थे कीर्तयो द्विषदङ्गनाः ॥
नित्यभ्रान्तियुजो यान्ति सितिमानं प्रतिक्षणम् ॥ १७ ॥

यशसां रिपुयोषितां च प्रस्तुतत्वं शुभ्रतां यान्तीति समानधर्मः ॥ अन्येषां केवलाप्रस्तुतानां यथा—

इन्द्रनागेन्द्र सिंहाब्धिदिग्दन्तिकुलपर्वताः ॥
चक्रिणि भ्राजमानेऽत्र मिथो निःसारतां गताः ॥ १८ ॥

इन्द्रादीनामप्रस्तुतत्वम् । निःसारतां गता इति समानधर्मः । अत्र गम्यमानौपम्यं वैवक्षिकं न वास्तवमिति कश्चित् । स न कविः । बन्ध्यासुतो निःसारतां गत इत्यपि वक्तुं शक्यत्वप्रसङ्गात् ॥ इयमपि तुल्ययोगिता ॥

नाकस्येन्द्रः सुजागर्ति रक्षणाय भुवो निधीट् ॥
निरस्यन्तेऽसुरास्तेन राजानोऽनेन गर्विताः ॥ १९ ॥

तथाचोक्तं—

उपमेयं समीकर्तुमुपमानेन युज्यते ॥

तुल्यैककालक्रियया यत्र सा तुल्ययोगिता ॥ २२० ॥

तमसा लुप्यमानानां लोकेऽस्मिन्साधुवर्त्मनाम् ॥

प्रकाशनाय प्रभुता भानोस्तव च दृश्यते ॥ २२१ ॥ इति

सामस्त्ये प्रस्तुतान्येषां तुल्यधर्मात्प्रतीयते ॥

औपम्यं दीपकं तत्स्यादादिमध्यान्ततस्त्रिधा ॥ २२२ ॥

प्रस्तुताप्रस्तुतानां समस्तानामेव यत्र समधर्मयोगेनौपम्यं तद्दीपकम् ॥

भात्यधोविष्टपे नागराजः स्वर्गे सुरेश्वरः ॥

आनन्दमन्दिरे क्षेत्रे भरते भरतेश्वरः ॥ २२३ ॥

पद्यादिवर्तिनो भातीतिपदस्य प्रत्येकमभिसम्बन्धादादिदीपकम् ॥

मौक्तिकैरुदधिर्भाति ज्वलत्तेजोभिरंशुमान् ॥

शीतलैः किरणैरिन्दुः स्वगुणैर्भरतेश्वरः ॥ २२४ ॥

मध्यदीपकम् ॥

ज्योत्स्नया वरया चन्द्रः सुरनद्या महाम्बुधिः ॥

स्रजेन्द्रो दिव्यया चक्री कीर्त्या चारु विराजते ॥ २२५ ॥

अन्त्यदीपकमिदम् ॥ श्लोकत्रयेऽत्र यथातथेत्यौपम्यं गम्यते ॥ क्वचिदौपम्याभावेऽपि दीपकं यथा—

कैलासाद्रौ मुनीन्द्रः पुरुरपदुरितो मुक्तिमाप प्रपूतः ॥

चम्पायां वासुपूज्यस्त्रिदशपतिनुतो नेमिरप्यूर्जयन्ते ॥

पावायां वर्द्धमानस्त्रिभुवनगुरवे विंशतिस्तीर्थनाथाः ।

सम्मेदाद्रौ प्रजग्मुर्दधतु विनमतां निर्वृतिं नो जिनेन्द्राः ॥ २२६ ॥

इदमलङ्कारद्वयं पदार्थद्वयगतम् । अधुना वाक्यार्थगतमलङ्कारद्वयं निरूप्यते ॥

वाक्ययोर्यत्र सामान्यनिर्देशः पृथगुक्तयोः ॥

प्रतिवस्तूपमा गम्यौपम्या द्वेधाऽन्वयान्यतः ॥ २२७ ॥

पृथगुक्तवाक्यद्वये यत्र वस्तुभावेन सामान्यं निर्दिश्यते तदर्थसाम्येन गम्यौपम्या प्रतिवस्तूपमा । अन्वयव्यतिरेकाभ्यां सा द्विधा क्रमेण यथा—

अमरेश्वर एवैकः शक्तः स्वर्लोकपालने ।
भरतेश्वर एवैकः क्षमः षट्खण्डपालने ॥ २८ ॥
वृषभेश्वर एवैकः शक्तो भव्यप्रतोषणे ॥
सूर्याद्विना क्षमो नान्यः सरोजपरितोषणे ॥ २९ ॥

उभयत्र यथातथेत्यौपम्यं गम्यते ॥

पुरोर्बहुसुतेष्वेष चक्री भरत एव च ॥
किं ज्योतिषां गणः सर्वः सर्वलोकप्रकाशकः ॥ २३० ॥

उक्तं च--

अनुपात्ताविवादीनां वस्तुनः प्रतिवस्तुना ॥
यत्र प्रतीयते साम्यं प्रतिवस्तूपमा तु सा ॥ ३१ ॥
बहुवीरेऽप्यसावेको यदुवंशेऽद्भुतोऽभवत् ॥
किं केतक्या दलानि स्युः सुरभीण्यखिलान्यपि ॥ ३२ ॥
वाक्ययोर्यत्र चेद्बिम्बप्रतिबिम्बतयोदितम् ॥
सामान्यं सह दृष्टान्तः साधर्म्येतरतो द्विधा ॥ ३३ ॥

वृक्षाश्चूतादयः श्रीफलकुसुमसुखैःस्वाश्रितात्मोपकारं ।
केचित् कुर्वन्तु कोऽपि स्फुटतरमहिमा कल्पवृक्षस्य दातुः ॥
सर्वाभीष्टस्य भूषाविभवचितरणं कुर्वतां चक्रपाणे- ।
र्जीवाजीवोरुरत्नप्रवरनिधिभृतः कोऽपि सम्पद्विशेषः ॥ ३४ ॥

कल्पशाखिनश्चक्रिणश्च बिम्बप्रतिबिम्बभावादौपम्यं गम्यते ॥

पुरुभाषोदयेनैव जाताः सम्यक्त्वसम्पदः ॥
तावदब्जानि निद्रान्ति यावन्नोदेति भास्करः ॥ ३५ ॥

यथा भानूदयमात्रेण पद्मोन्मीलनं तथा पुरुजिनदिव्यध्वन्युदयमात्रेण सम्यक्त्वानि जातानि भव्यानामिति वैधर्म्येण बिम्बप्रतिबिम्बभावः ॥ वाक्यार्थयोरमुद्रानिष्पादितयोर्वस्तुनोरिव स्फुटे सादृश्ये प्रतिवस्तूपमा ॥ बिम्बप्रतिबिम्बयोरिव किञ्चिदस्फुटे तु दृष्टान्तः ॥ न हि बिम्बप्रतिबिम्बयोः स्फुटतरं सादृश्यं नियमेन परस्परविरुद्धदिङ्मुखत्वात् ॥ प्रतिबिम्बस्य हानो-

पादानयोग्यताविरहाच्च ॥ अथ गम्यमानौपम्यप्रस्तावान्निदर्शनेष्यते ॥

उपमानोपमेयस्थौ यत्रधर्मावसम्भवौ ॥
संयोज्याक्षिप्यते बिम्बक्रिया द्वेधा निदर्शना ॥ ३६ ॥

उपमानोपमेयधर्मयोरुपमेयोपमानाभ्यामन्वयाभावादन्वयसम्बन्धार्थे प्रतिबिम्बकरणमाक्षिप्यते यत्र सा निदर्शना द्विधा । उपमानधर्मस्य निबद्धस्योपमेयगत्वेनासम्भवात्प्रथमा । उपमेयधर्मस्योपमानगत्वेनासम्भवाद्वितीया ॥ सा क्रमेणोच्यते ॥

सुमनोनिलयस्तुंगो भूभृदीशो निधीश्वरः ॥
रत्नसानोरभिख्यां स धत्ते विश्वम्भराभृतः ॥ ३७ ॥

मेरोः शोभायाश्चक्रिण्यसम्भवात्तदभिख्यां सदृशशोभां धरतीति प्रतिबिम्बक्रियाक्षेपः ॥

कारुण्यनिधिचक्रेशकीर्तिधावल्यसम्पदः ॥
दुग्धाब्धिमुकुरे शुभ्रे दृश्यन्ते विस्तृतात्मनि ॥ ३८ ॥

यशोधावल्यस्य क्षीराब्धावसम्भवेन साम्यनिश्चयात्प्रतिबिम्बनं प्रतीयते ॥

यत्र भेदप्रधानं तु सदृक्षत्वं सधर्मणोः ॥
अल्पाधिक्योक्तिभेदेन व्यतिरेको द्विधा यथा ॥ ३९ ॥

सधर्मणोरुपमानोपमेययोरुपमानादुपमेयस्याल्पत्वेन आधिक्येन वा वचनेन भेदमुख्यं सादृश्यं प्रतीयते स व्यतिरेकः ॥

चन्द्रस्य त्वद्विषत्कीर्तेः क्षीणत्वेनास्तु तुल्यता ॥
किन्तु चक्रेश तत्कीर्तेर्नैव वृद्धिः पुनः सदा ॥ २४० ॥

चन्द्रस्य पुनःपुनर्वृद्धिसम्भवेनाधिक्यमुपमेयभूतस्य तु वैरियशसः सदाऽपि वृद्ध्यसम्भव इति न्यूनत्वम् ॥

तव सिंहस्य चक्रेश पौरुषेणास्तु तुल्यता ॥
किन्तु ते भयतोऽरण्यमन्याशंका द्विषो गताः ॥ ४१ ॥

वनस्थितमन्यं सिंहमशङ्कमाना रिपवोऽरण्यं गता इत्युपमेयस्य चक्रिणो अधिकत्वम् ॥

पदैर्भिन्नैरभिन्नैर्वा वाक्यं यत्रैकमेव हि ॥
अर्थाननेकान्प्रब्रूते स श्लेषो भणितो यथा ॥ ४२ ॥

भिन्नपदैरनेकार्थं वाक्यं यत्र वक्ति स श्लेषो यथा ॥

तन्वन्कुवलये तुष्टिं वारिजोल्लासमाहरन् ॥
कलानिधिरसौ रेजे समुद्रपरिवृद्धिदः ॥ ४३ ॥

पक्षे भूवलये अधिजातहर्षे मुद्रया युक्तानाम् ॥ द्वितीयश्लेषो यथा ॥

राज्ञस्तस्योदये तोषकैरस्तापहरैः करैः ॥
सिन्धुनाऽधो महावेलां प्राप्य संववृधे तराम् ॥ ४४ ॥

विशेषणवैचित्र्यमूलपरिकरः कथ्यते ॥

विशेषणे त्वभिप्राययुते परिकरो यथा ॥
स्वयोगे चक्रिणस्तापमहृतेन्दुमुखी वधः ॥ ४५ ॥

तापहारित्वे इन्दुमुखीति विशेषणं साभिप्रायम् ॥

विशेष्ये साभिसन्धौ तु मतः परिकराङ्कुरः ॥
चतुर्णामनुयोगानां प्रणेताऽसौ चतुर्मुखः ॥ ४६ ॥

चतुर्मुख इति विशेष्यं चतुरनुयोगोपदेशेन साभिप्रायं परिकराङ्कुरः ॥ परिकरापेक्षया किंचित् गूढत्वात्तद्भेदः ॥

वक्ष्यमाणोक्तयोर्यत्र निषेधाभासस कथा ॥
विशेषप्रतिपत्त्यर्थं साऽऽक्षेपालङ्कृतिर्यथा ॥ ४७ ॥

उक्तविषये वस्तुनिषेधः कथननिषेधश्च वक्ष्यमाणविषये सामान्यप्रतिज्ञया विशेषनिषेधः । अंशोक्तावंशातरनिषेध इत्याक्षेपश्चतुर्धा क्रमेण यथा ॥

चक्रेशिन्राजसन्देशहरा न वयमीश्वर ॥
त्रिलोकीबान्धवे नारिस्त्वयि कश्चिदिति कथ्यते ॥ ४८ ॥

रिपुनृपसन्धिविग्रहकारिवचोहराणामुक्तौ न वयं सन्देशहरा इति वस्तुनिषेधः । स च सन्देशः कलहोचितकपटवचनपरिहारेण सत्यवचःपर्यवसानः । भोः सर्वलोकरक्षक त्वया ते राजानः शत्रवो नावलोकनीयाः ॥ किन्तु मे भृत्या इति पालनीया इत्यादिविशेषं सूचयति ॥

मां पाहि जिनपेत्युक्तिर्जाघटीति कथं त्वयि ॥
स्वस्य किञ्चिदनुद्दिश्य त्रिलोकीरक्षके पुरौ ॥ ४९ ॥

अत्र मां पाहीत्युक्तं कथननिषेधाभासान्नियमेन रत्नत्रयद्रविणवितरणेन परिपालनीयोऽहमिति विशेष आक्षिप्यते ॥

पृच्छामि किञ्चिदीशान तवाग्रे पुरुदेव भोः ॥
किं पृच्छयतेऽथवा विश्ववस्तुविद्योतभास्कर ॥ ५० ॥

पृच्छामीति कथनसामान्यप्रतिज्ञया विशेषकथननिषेधाभासनादुत्तमधर्मप्रणयनेन पवित्रीकरणीयोऽहमित्यादिविशेषो गम्यते ॥

त्वामाश्रिता वयं देव त्रिलोकीपालनक्षमम् ॥
आदिब्रह्मन्किमुक्तेन बहुना कण्ठशोषिणा ॥ ५१ ॥

त्वामाश्रिता इति अंशोक्तौ बहुनोक्तेन किमिति अंशान्तरनिषेधाभासादभ्युदयनिःश्रेयसफलप्रदानेन रक्षणीया वयमिति भव्यार्थित्वविशेष आक्षिप्यते ॥ तुल्यार्थतया अनिष्टविध्याभासोऽप्याक्षेप इष्टः ॥ निषेधस्यानुपपद्यमानत्वेनाभासत्वं यथा तथा ॥

चक्रिशासनवैमुख्यं चेत्करोषि कुरु प्रिय ॥
महाग्निकुण्डसम्पातप्रकारोऽभ्यस्यते मया ॥ ५२ ॥

अनिष्टमाज्ञाविमुखत्वं तद्विधीयते स विधिरनुपपद्यमान आभासे पर्यवसितः ॥ सम्पातप्रकारोऽभ्यस्यत इति रिपुस्त्रीवाण्या विध्याभास एवोक्तः ॥

उक्तिर्यत्र प्रतीतिर्वा प्रतिषेधस्य जायते ॥
आचक्षते तमाक्षेपमलङ्कारं बुधा यथा ॥ ५३ ॥
अलं दम्भोलिना चक्रं यद्ययोध्यापुरी यदि ॥
किं तयाऽप्यमरावत्या किमिन्द्रेणापि चेन्निधीट् ॥ ५४ ॥
यद्यस्त्यरण्यवासित्ववाञ्च्छा भो भूमिपालकाः ॥
भवन्तु भरताधीशमहाज्ञाविमुखाश्चिरं ॥ ५५ ॥

लक्षणमिदमुक्तेऽन्तर्भवति ॥

निन्दास्तुतिमुखाभ्यां तु स्तुतिनिन्दे प्रतीतिगे ॥

यत्र द्वेधा निगद्येत व्याजस्तुतिरियं यथा ॥ ५६ ॥

निन्दामुखेन स्तुतिरेव यत्र प्रतीयते सा एका । स्तुतिमुखेन निन्देव गम्यते यत्र सा द्वितीया व्याजस्तुतिरिति द्विधा क्रमेणोच्यते—

सर्वजीवदयाधारः पुरुस्त्वं गीयसे कथम् ॥
येन ध्यानासिना घातिवैरिवृन्दं विदारितम् ॥ ५७ ॥

तव स्याद्वादिनो देव द्विषः साहसिका अहो ॥
दविष्टाधोवनीः सर्वा निःसहायाः प्रयान्त्यरम् ॥ ५८ ॥

गम्यप्रस्तुतेरप्रस्तुतप्रशंसा कथ्यते—

प्रकृतं यत्र गम्येताप्रकृतस्य निरूपणात् ॥
अप्रस्तुतप्रशंसा सा सारूप्यादेरनेकधा ॥ ५९ ॥

सारूप्यात्सामान्यविशेषभावात् कार्यकारणभावाच्च प्रस्तुतप्रतीतिरप्रस्तुतकथनादित्यनेन समासोक्तिव्यवच्छेदः ॥ न च कार्यादेः कारणादिप्रतीतावनुमानान्तर्भावशङ्का द्वयोरपि गम्यगमकयोरनुमानालंकारे प्रकृतत्वोपगमनात ॥ एतेन पर्यायोक्तविच्छित्तिरपि ॥

पलाशे कोकिला माध्वं सुस्वादुफलवर्जिते ॥
आध्वं पक्वफलानम्रे सहकारे सुखप्रदे ॥ ६० ॥

अत्र कोकिलवृत्तान्तेनाप्रकृतेन सर्वानाप्ताभासान्विहायानन्तसुखप्रदः पुरुरेक एव भव्यैः सेव्य इति प्रकृतं गम्यते ॥ सारोपा तु—

भूपालकुञ्जराः श्रेष्ठाः शौर्यवैभवशालिनः ॥
वेधसो महतीं सृष्टिं सर्वमान्यां प्रचक्रिरे ॥ ६१ ॥

चक्रिणो गुणमहत्वे प्रकृते नृपसामान्यविशेषप्रतीतिः ॥

वक्तुकामाऽपि न ब्रूते द्रष्टुकामा न पश्यति ॥
स्पृशति स्प्रष्टुकामाऽपि न कान्ता साऽवतिष्ठते ॥ ६२ ॥

मुग्धस्त्रीणां नूतनसङ्गमे महति लज्जेति सामान्ये प्रकृते विशेषात् सामान्यप्रतीतिः ॥

सूर्योऽतेजा इवेन्दुश्च निष्कान्तिरिव जातवान् ॥

भरतेशमहीनाथे शोभमाने भुवि स्फुटम् ॥ ६३ ॥

सूर्यादेरतेजस्त्वादिभिः कार्यभूतैः कारणभूतं च प्रतापादि गम्यत इति कार्यात्कारणप्रतीतिः ॥

भरतेशमहीभर्तुः कामधेनोरनश्वरीम् ॥

स्थितां मयि दयादृष्टिं पश्यन् विस्मयसे कथम् ॥ ६४ ॥

पूर्वं दरिद्रस्त्वमिदानीमीदृशैश्वर्यवान् कथं भवसीति कार्यं पृष्ठवते विस्मयं गताय मित्राय कारणभूतचक्रिकृपादृष्टिरुक्तेति कारणात् कार्यप्रतीतिः ॥

गम्यत्वप्रस्तुतेः पर्यायोक्तं दीयते—

प्रस्तुतस्यैव कार्यस्य वर्णनात् प्रस्तुतं पुनः ॥

कारणं यत्र गम्येत पर्यायोक्तं मतं यथा ॥ ६५ ॥

शत्रूद्यानमहापक्वफलतृप्ताः क्षुधार्तयः ॥

चक्रिसेनाचरा युध्दे शान्ताः शौर्यातिशालिनः ॥ ६६ ॥

रिपुपुरोद्यानपक्वफलानुभवेन चक्रिसेनाचरकृतेन कार्येण रणप्रारम्भे एव स्वपुराणि त्यक्त्वा पलायिता रिपव इति कारणं गम्यते ॥

आक्षिप्तिरुपमानस्य कैमर्थक्यान्निगद्यते ॥

तस्योपमेयता यत्र तत्प्रतीपं द्विधा यथा ॥ ६७ ॥

लोकोत्तरस्योपमेयस्योपमानाक्षेपो यत्र तदेकं । यत्र चोपमानस्योपमेयत्वकल्पना तद्वितीयमिति प्रतीपं द्विधा यथा ॥

त्रिलोकीं द्योतयत्येतां जिनेशे दिव्यभाषया ॥

निर्लज्जः किमुदेत्येष सहस्रकिरणोऽधुना ॥ ६८ ॥

शुभाणुपुञ्ज एवैष त्रिजगत्यपि दुर्लभः ॥

अल्पज्ञैः कथमेतेन हेमाद्रिरुपमीयते ॥ ६९ ॥

तर्कन्यायमालालंकार उच्यते—

साधनात्साध्यविज्ञानमनुमानमिदं यथा ॥

पदवाक्यार्थगो हेतुः काव्यलिङ्गं मतं यथा ॥ २७० ॥

पदार्थगत्वेन वाक्यार्थगत्वेन वा यत्र हेतुः प्रतिपद्यते स काव्यलिङ्गालङ्कारः ॥

चन्द्रप्रभं नौमि यदीयभासा । नूनं जिता चान्द्रमसी प्रभा सा ॥
नो चेत्कथं तर्हि तदङ्घ्रिलग्न- । नखच्छलादिन्दुकुटुम्बमासीत् ॥ ७१ ॥

इदमनुमानम् ॥

म्रियमाणोऽपि भव्यौघः पुनरुज्जीवनं गतः ॥
पुरुदेवप्रसादश्रीजीवनौषधपानवान् ॥ ७२ ॥

नरकादिघोरदुःखरूपमृतिप्राप्तानां भव्यानां पुनरुज्जीवने पुरुजिनधर्मप्रणीतिरूपप्रसादजीवनौषधं हेतुः ॥ पदार्थगतहेतुरिति काव्यलिङ्गमिदम् ॥ तस्य विशेषणगत्वेन पदार्थगत्वम् ॥

नमः सिद्धेभ्य इत्येवं शुभा पञ्चाक्षरावली ॥
बिभ्रतो हृदि यां भव्या लोकाग्रपदमाश्रिताः ॥ ७३ ॥

काव्यार्थगतो हेतुरयम् ॥

ससामान्यविशेषत्वात् कार्यकारणभावतः ॥
प्रकृतं यत्समर्थ्येतार्थान्तरन्यसनं मतम् ॥ ७४ ॥

सामान्यविशेषभावेन कार्यकारणभावेन च प्रकृतस्य समर्थनं यत्र सोऽर्थान्तरन्यासः ॥ सामान्याद्विशेषसमर्थनं यथा—

पलायमाना निधिपारिभूपा । भीताश्च चञ्चापुरुषेभ्य आरात् ॥
अचेतनेभ्योऽपि तथाहि सर्व- । मन्तर्भयानां भयमातनोति ॥ ७५ ॥

अन्तःकरणे चकितानां सर्वं भयं करोतीति सामान्यं तृणकृतनरेभ्यो भीता इति विशेषं समर्थयति ॥

महापुरुषसंसर्गादधीरपि सुधीर्भवेत् ॥
पुरुदेवपदाश्रित्या तिर्यग्जीवो मुनीयते ॥ ७६ ॥

जिनपदाश्रयेण तिर्यग्जीवो मुनीयत इति विशेषेण अधीरपि सुधीः स्यादिति सामान्यं समर्थ्यते इति विशेषात्सामान्यसमर्थनम् ॥

कण्ठस्थः कालकूटोऽपि शम्भोः किमपि नाकरोत् ॥
सोऽपि दन्दह्यते स्त्रीभिः स्त्रियो हि विषमं विषम् ॥ ७७ ॥

अत्र स्त्रियो हीति विशेषात् स्त्रीभिरिति विशेषसमर्थनमिति विशेषाद्विशेष-

समर्थनं च ज्ञेयम् ॥ अथवा सामान्याद्विशेषसमर्थनमेव स्त्रियो हीति सर्वस्त्री-सामान्येन गिरिजादिस्त्रीविशेषस्य दाहकत्वसमर्थनात् ॥ कार्यकारणभा-वेन यथा—

भक्ता भवन्तु भो जीवा न निर्भक्ता जिनेश्वरे ॥
सोऽभक्तसमभावोऽपि भक्तान् भाग्यं नयत्यरम् ॥ ७८ ॥

भक्तिकार्येण भाग्यनयनेन भक्तत्वं कारणं समर्थितम् ॥ कारणात् कार्यसमर्थनं तु काव्यलिङ्गे अन्तर्भूतमिति नोक्तमतोऽर्थान्तरन्यासस्य त्रयो भेदाः ॥

उद्दिष्टा यैः क्रमैरर्थाः पूर्वं पश्चाच्च तैः क्रमैः ॥
निरूप्यन्ते तु यत्रैतद्यथासंख्यमुदाहृतम् ॥ ७९ ॥

चित्ते मुखे शिरसि पाणिपयोजयुग्मे ।
भक्तिं स्तुतिं विनतिमञ्जलिमञ्जसैव ॥
चेक्रीयते चरिकरीति चरीकरीति ।
यश्चर्करीति तव देव स एव धन्यः ॥ २८० ॥

यत्र कस्यचिदर्थस्य निष्पत्तावन्यदापतेत् ॥
वस्तु कैमुत्यसन्न्यायादर्थापत्तिरियं यथा ॥ ८१ ॥

यत्रैकस्य वस्तुनो भावे तत्समानन्यायेन किमुतेत्यादिनाऽर्थान्तरमापतति साऽर्थापत्तिः ॥

यात्रामात्रेण चक्रचंध्योः प्रणता मागधादयः ॥
सुरेशाः कम्पितात्मानः किमन्ये नृपमानिनः ॥ ८२ ॥

अपि च ।

अवटुतटमटति झटिति स्फुटचटुवाचाटधूर्जटेर्जिह्वा ॥
वादिनि समन्तभद्रे स्थितवति सति का कथाऽन्येषाम् ॥ ८३ ॥

सर्वत्र सम्भवद्वस्तु यत्रैकं युगपत्पुनः ॥
एकत्रैव नियम्येत परिसंख्या तु सा यथा ॥ ८४ ॥

सा द्विधा प्रश्नाप्रश्नपूर्वकत्वभेदात् ॥ तद्द्वयमपि द्विधा वर्ज्यस्य शाब्दत्वार्थ-त्वाभ्याम् ॥ तत्र शाब्दवर्ज्या प्रश्नपूर्वा यथा—

आधारः कोऽस्ति जीवानां पुरुदेवो न विष्टपम् ॥
अलङ्कारस्त्रिलोक्याः कः पुरुर्न च सुरालयः ॥ ८५ ॥

अर्थवर्ज्या प्रश्नपूर्वा यथा—

तमोनिवारकः कोऽत्र वर्द्धमानजिनेश्वरः ॥
शीतलीकुरुते लोकं को दिव्यध्वनिरर्हतः ॥ ८६ ॥

अप्रश्नपूर्वा शाब्दवर्ज्या यथा—

गोष्ठी विद्वत्सु न स्त्रीषु दया सत्त्वे न चैनसि ॥
चिन्ता तत्त्वे न कामादौ भरताख्यरथाङ्गिनः ॥ ८७ ॥

अर्थवर्ज्या प्रश्नपूर्वा यथा—

परस्त्रीषु स जात्यन्धो निष्कार्येषु सदाऽलसः ॥
मूकः परापवादेषु पङ्गुः प्राणिवधेषु च ॥ ८८ ॥

श्लेषेणाऽपि चारुत्वातिशयरूपा परिसङ्ख्या यथा—

यत्रार्तवत्त्वं फलिताटवीषु । पलाशिता द्रौ कुसुमेऽपरागः ॥
निमित्तमात्रे पिशुनत्वमासी- । न्निरोष्ठ्यकाव्येष्वपवादिता च ॥ ८९ ॥

ऋतुः प्राप्त आसामटवीनां आर्तवास्तासां भावः। आर्तवतो दुःखवतो भावश्च ॥ द्रौ द्रुमे पर्णवत्ता मांसभक्षित्वं च ॥ परागः पुष्परजः अपरागः सन्तोषाभावः परेषामागोऽपराधो वा॥ शुभाशुभकार्यसूचकत्वं कर्णेजपत्वं च ॥ पश्च वश्च पवौ आदी येषां ते पवादयः । पकारादय ओष्ठ्यवर्णा न एषां तानि अपवादीनि तेषां भावस्तत्ता निन्दावादिता च ॥

प्रश्नोत्तरे निबध्येते बहुधा चोत्तरादपि ॥
प्रश्न उन्नीयते यत्र सोत्तरालङ्क्रिया द्विधा ॥ ९० ॥

*यत्रानेकवारमुत्तरं प्रश्ननिरूपणपूर्वकं तदेकमुत्तरं यत्र च निबध्यमानादुत्तरात्प्रश्न उन्नेयः तदुत्तरं द्वितीयम् ॥* क्रमेण यथा—

को लघुर्याचकः कोऽरिः पाप्मा को बन्धुरागमः ॥
का निद्रा मूढता धर्मे कस्त्राता जगतः पुरुः ॥ ९१ ॥

किमद्य ज्ञानस्यं बुधवरमहाभाग जगति ।

प्रभुः श्रीवीराख्योऽजनि भुवि यदा कल्पविटपी ॥
तदा जातो धर्मः परमविभवः कामसुरभि- ।
र्महाजैनाश्चोद्यद्विविधचरिताः प्रादुरभवन् ॥ ९२ ॥

यदा वीरजिनो जातस्तदा धर्मः सुलभो जातः ॥ जैनोत्तमाश्च नानाचारित्रभाजो बह्वो जाताः ॥ किं पृच्छ्यते त्वयाऽधुनेत्युत्तरात् श्रीवीरप्रभौ सति धर्मोदितोदितत्वमस्ति किं? किं जैनाश्च सम्पत्तिभाजः संतीति? प्रश्न उन्नीयते अथ वाक्यन्यायमूलप्रस्तावेन विकल्पः प्रस्तूयते—

विरोधे तु द्वयोर्यत्र तुल्यमानविशिष्टयोः ॥
औपम्याद्युगपत्प्राप्तौ विकल्पालंकृतिर्यथा ॥ ९३ ॥
आज्ञा मन्दारमालाऽस्य ध्रियतां मूर्ध्नि भो नृपाः ॥
खड्गजाताग्निसन्दीप्तज्वालामालाऽथवा ध्रुवम् ॥ ९४ ॥

चक्रिणि प्रभवति भूपानां सन्धिविग्रहनामाभ्यां तुल्यप्रमाणाभ्यामाज्ञासुमधारित्वकृपणाग्निज्वालामालाधारित्वे युगपदेव प्राप्ते विरोधाद्यौगपद्यासम्भवे विकल्पः ॥ एतत्प्रतिपक्षभूतः समुच्चय उच्यते—

क्रियाणां चामलत्वादिगुणानां युगपत्ततः ॥
अवस्थानं भवेद्यत्र सोऽलङ्कारः समुच्चयः ॥ ९५ ॥
निष्क्रामति पुरुः स्वामी स्तुवन्ति स्तुतिपाठकाः ॥
अनुयान्ति महीपाला वहन्ति शिबिकां सुराः ॥ ९६ ॥
उदिते भासति ज्ञानदीधितौ पुरुभर्तरि ॥
विशदं भव्यचेतोऽदृक्घूकानां कलुषं मनः ॥ ९७ ॥

उदाहरणद्वयमुक्तं भिन्नविषयत्वे ॥ एकविषयत्वे यथा—

आदिब्रह्महितोपदेशविमुखा मिथ्यादृशो जन्तवः ।
श्वभ्रेषु प्रभवन्ति यान्ति दलनं वाञ्छन्ति सौख्यास्पदम् ॥
भ्रश्यन्त्युत्पतनं च यान्ति निहताः क्रन्दन्ति मूर्छन्ति ते ।
घूर्णन्ते प्रलपन्ति दुःखनिवहं ते भुंक्ष्वते सर्वदा ॥ ९८ ॥

गुणक्रियासाकल्येन यथा—

आदिब्रह्मणि सूदिते विशदहृत्कौतूहलं निर्मल- ।
स्फाराक्षं वदनारविन्दविकचं भेरीरवव्यापनम् ॥
नानाभूषणकान्तिपुञ्जविसरव्याप्ताशमिन्द्रादयः ।
साकेतं ययुरुत्तमाङ्गविनतिं कुर्वन्त आराद्वराः ॥ ९९ ॥

अनेकेषां कारणानामहमहमिकया यत्रैकं कार्यं साधयितुमुद्यमः सोऽपि समुच्चय एव ॥ यथा—

शौचं सत्यं क्षमा त्यागः प्रागल्भ्यं मृदुताऽऽर्जवम् ॥
वृत्तं चारु विवेकित्वं दयां पुष्णन्ति चक्रिणः ॥ २०० ॥

शौचादीनां कृपासम्पादने प्रत्येकं कारणत्वेऽपि युगपदहमहमिकया सम्बन्धः ॥

कार्यसिद्ध्यर्थमेकस्मिन्हेतौ यत्र प्रवृत्तिके ॥
काकतालीयवृत्तोऽस्य समाधिरुदितो यथा ॥ २०१ ॥

कार्यसिद्ध्ये यत्रैकस्मिन्कारणे वृत्ते काकतालीयन्यायेन कारणमन्यदागत्य तत्कार्यं सुष्ठु करोति स समाधिः ॥

चक्र्याश्लेषधियं कर्तुं विस्रस्तकुचवाससि ॥
वध्वां पारावतस्तावच्चुकूज मणितध्वनिम् ॥ २ ॥

तल्पस्थितचक्रिणः परिरम्भणधीजननार्थं कान्तया कुचवस्त्रविस्रंसने प्रवर्तिते काकतालीयतया जातेन पारावतध्वनिना आलिंगनलक्षणकार्यस्य सुकरत्वम्॥

लोकन्यायमूलालंकाराः कथ्यंते—

यत्रात्यद्भुतचारित्रवर्णनाद्भूतभाविनोः ॥
प्रत्यक्षायितता प्रोक्ता वस्तुनोर्भाविकं यथा ॥ ३ ॥

न चातीतानागतयोः प्रत्यक्षवदवभासित्वं विरुध्यते? अत्याश्चर्यार्थवर्णनया भावकानां चेतसि भावनोत्पत्तेः ॥ तथाच प्रत्यक्षायमाणत्वं भावनया पौनःपुन्येन चेतसि निदर्शनाद्घटत एव ॥

पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये ॥
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥ ४ ॥

इत्याद्यदृश्यमानार्थेऽपि प्रत्यक्षायमाणत्वसम्भवात् ॥

चक्रिसेनाग्रतो रेजे चक्राब्जमरसद्दलम् ॥
दलाग्रे यस्य वार्बिन्दुरिवालक्ष्यत सर्वभूः ॥ ५ ॥

सकलद्वीपसागरयुक्तायाः सर्वभुवश्च धारायां जलबिन्दुरूपतेति अद्भुतवर्णनया तत्र सा बिन्दुरेवेति भावनया भावकस्य प्रत्यक्षवत्प्रतीतिसम्भवः ॥ न चेयं स्वभावोक्तिरस्या विषयस्याद्भुतत्वेन भाव्यत्वाभावात् ॥ नाप्युत्प्रेक्षा भाविनोः प्रत्यक्षत्वेनाध्यवसायाभावात् ॥ नेयं रसवदाद्यलङ्कृतिः अत्र विभावानुभावाद्यनुसन्धानेन रसादेर्भाव्यत्वेन अद्भुतत्वाभावात् ॥ भावनया अभ्रान्तिनिरूपणान्न भ्रान्तिमानपि ॥

यत्रेष्टतरवस्तूक्तिः सा प्रेयोऽलंकृतिर्यथा ॥
शृङ्गारादिरसोत्पुष्टिर्यत्र तद्रसवद्यथा ॥ ६ ॥

भो भव्याः पिबतादराच्छ्रुतिपुटैः कल्याणवार्तासुधा- ।
मादिब्रह्मजिनेशिनः सुरगिरौ जन्माभिषेकोत्सवः ॥
जातस्तेन सुरालयोऽजनि गिरिः स्वर्गायिता भूरपि ।
देवाः पावनमूर्तयो जनवराः सर्वे कृतार्थीकृताः ॥ ७ ॥

विश्वलोकप्रियतरस्य पुरुजिनजन्माभिषेकस्य प्रतिपादनं

रहस्सु वस्त्राहरणे प्रवृत्ताः । सहासगर्जाः क्षितिपालवध्वाः ॥
स्वकोपकन्दर्पधनुःप्रमुक्त- । शरैघहुङ्कारग्वा इवाभुः ॥ ८ ॥

अत्र शृङ्गाररसस्य पोषणम् ॥ एवं रसान्तरेष्वपि योज्यम् ॥

यत्रात्मश्लाघनारोहो यथा सोर्जस्वलंक्रिया ॥
प्रत्यनीकं रिपुध्वंसाशक्तौ तत्सङ्गिदूषणम् ॥ ९ ॥

यत्र समर्थस्य प्रतिपक्षस्य निराकरणासामर्थ्ये तत्सम्बन्धिनिराकरणं प्रत्यनीकालङ्कारः सः ॥

यत्तेजोऽनलदग्धनाकपदिगाद्यब्धिस्थदेवाधिपा ।
यत्पादद्युतिवारिसिक्तशमिता मेघेश्वराख्यां गतः ॥
तद्दत्तां मम गर्जितेन पतिता भूमौ कुलक्ष्माभृत- ।
श्चक्रेट्सन्निभमेरुमात्ररहिताः श्लाघाऽन्यघातेन का ॥ २१० ॥

अत्र जयकुमारस्यात्मश्लाघा ॥

चक्रिकीर्तिपरिस्फूर्तिजितस्वमहिमा शशी ॥
तत्सम्बन्धिमहापद्मं पद्माकरमपास्यति ॥ ११ ॥

चक्रिसम्बन्धिनी महालक्ष्मीर्यस्य अथवा महापद्मा निधयः। पक्षे अम्बुजानि । तवास्यादितुल्यपङ्कजानां सत्सम्बन्धित्वं वा ॥

यद्वस्तु केनचित्कर्त्रा येन साधितमन्यथा ॥
तत्तेनैवान्यकर्त्रा चेद्व्याघातः सप्रभाष्यते ॥ १२ ॥

यद्वस्तु येन केनापि कर्त्रा येन सार्थनेन साधितं तेनैव साधनेन तद्वस्तु अन्येन कर्त्राऽन्याथाक्रियते चेत्स व्याघातः ॥

बाहुभ्यां लब्धमैश्वर्यं गर्वपर्वतवैरिभिः ॥
निःसारीकृतमेताभ्यां महता चक्रपाणिना ॥ १३ ॥

क्रमेणानेकमेकस्मिन्नेकं वा यदि वर्तते ॥
अनेकस्मिन्यदाधेयं पर्यायः स द्विधा यथा ॥ १४ ॥

अनेकमाधेयमेकस्मिन्नाधारे यदि वर्तते एकः पर्यायः । क्रमेणेत्यनेन समुच्चयालङ्कारव्यवच्छेदः तत्रैकत्रानेकेषां युगपद्वर्तनात् ॥ यत्रानेकस्मिन्नेकं यदि स द्वितीयः । अत्रापि क्रमेणेत्यनेन विशेषालङ्कारविच्छेदः तत्र अनेकत्र एकस्य युगपद्वर्तनात् ॥

कुवादिनः स्वकान्तानां निकटे परुषोक्तयः ॥
समन्तभद्रयत्यग्रे पाहि पाहीति सूक्तयः ॥ १५ ॥

अत्र विजिगीषोक्तिदैन्योक्तीनां एकाधारे अनेकेषां क्रमेण प्रवृत्तिः ॥

लक्ष्मीः पद्माकरस्था जडगृहमिदमित्याश्रिता चन्द्रमत्र ।
स्थित्वा दोषाकरोऽयं त्विति च पुनरतः संश्रिता मेरुमत्र ॥
स्थित्वा गर्वोन्नतोऽयं भवति पुनरिति प्राप्य तस्मान्निधीशं ।
तस्य श्रीवक्षसीद्धे स्थिरतरमहसि स्थैर्यभागात्तत्दृष्टिः ॥ १६ ॥

एकस्या लक्ष्म्याः सरःप्रभृत्यनेकत्र क्रमेण प्रवर्तनम् ॥

विदग्धमात्रबोध्यस्य वस्तुनो यत्र भासनम् ॥

कायाकारेङ्गिताभ्यां हि सा सूक्ष्मालंकृतिर्यथा ॥ १७ ॥

सुभद्रा नवसंसर्गे प्रिये क्षुतवति द्रुतम् ॥

ईषदुद्भिन्नबिम्बोष्ठी स्वकर्णस्पर्शनं व्यधात् ॥ १८ ॥

नूतनसङ्गे लज्जया दीर्घायुर्भवेति वक्तुमशक्तया स्वकर्णस्पर्शनेन तदर्थः प्रकाशितः ॥

महासमृद्धिरम्याणां वस्तूनां यत्र वर्णनम् ॥

विधीयते च तत्र स्यादुदात्तालंक्रिया यथा ॥ १९ ॥

समवसरणमध्ये ब्रह्मपादप्रणम्रान् ।

मकुटघटितरत्नान् दिग्विराजप्रभांगान् ॥

त्रिदशमनुजराजान् स्तोत्रसंघट्टरम्यान् ।

प्रमुदितमनसस्तान्वीक्ष्य हृष्टः स चक्री ॥ २२० ॥

भवेद्विनिमयो यत्र समेनासमतः सह ॥

समन्यूनाधिकानां स्यात्परिवर्तिस्त्रिधा यथा ॥ २१ ॥

समेन समन्यूनाधिकयोरक्रमाभ्यामधिकन्यूनाभ्यां सह विनिमयः परिवृत्तिः ॥ तत्र समेन सह परिवृत्तिर्यथा ॥

स्तोत्रकोटिं वितीर्यास्मै चक्रिणे कविकुञ्जराः ॥

धनकोटीं लभन्ते स्म दत्तां चक्रीशिना सता ॥ २२ ॥

नतिमूलधनं दत्वा भव्यजीवैः स्वयम्भुवे ॥

त्रीणि रत्नानि लभ्यन्ते दुर्लभानि जगत्त्रये ॥ २३ ॥

प्रणाममूलधनतो रत्नत्रयस्याधिक्यमिति न्यूनाधिकपरिवृत्तिः ॥

युद्धे जयकुमारेण जिता गर्वितभूभुजः ॥

भूषणानि किरातेभ्यो दत्वा गुञ्जादि भेजिरे ॥ २४ ॥

त्यज्यमानमण्डनवस्त्रादेर्दीयमानगुञ्जामणिवल्कलादिकं न्यूनमिति अधिकेन न्यूनपरिवृत्तिः ॥ शृङ्खलान्यायमूलालङ्कारानाह—

प्रत्युत्तरोत्तरं हेतुः पूर्वं पूर्वं यथा क्रमात् ॥

असौ कारणमालाख्यालंकारो भणितो यथा ॥ २५ ॥

धर्मेण पुण्यसम्प्राप्तिः पुण्येनार्थस्य सम्भवः ॥
अर्थेन कामभोगश्च क्रमोऽयं चक्रिणि स्फुटः ॥ २६ ॥
यत्रोत्तरोत्तरं पूर्वं पूर्वं प्रति विशेषणम् ॥
क्रमेण कथ्यते त्वेकावल्यलङ्कार इष्यते ॥ २७ ॥
पुरुदेवपुरी चारुश्रावकव्रजशोभिता ॥
श्रावकाः स्थितधर्माणो धर्मो यत्र त्रयात्मकः ॥ २८ ॥

इदमुदाहरणं स्थापनेन ॥ अपोहेनापि स्याद्यथा—

न सा सभा कवित्वादिगुणिविद्वज्जनोज्झिता ॥
विद्वज्जना न ते श्रद्धासम्यग्ज्ञानविवर्जिताः ॥ २९ ॥
यत्रोत्तरोत्तरं प्रत्युत्कृष्टत्वावहता भवेत् ॥
पूर्वपूर्वस्य वै चैतन्मालादीपकमिष्यते ॥ ३३० ॥
आदिब्रह्माऽऽप सद्बोधं बोधः प्रापार्थसञ्चयम् ॥
पदार्थनिवहोऽप्याप लोकालोकस्वरूपताम् ॥ ३१ ॥

यत्रोत्तरोत्तरोत्कर्षः सा सारालंकृतिर्यथा—

तत्त्वे जीवोऽत्र भव्यस्त्रसपरिणमनोऽत्रापि पञ्चाक्षशंसी ।
मर्त्योऽरोगो विवेकी धनिक उरुकुलोऽत्रापि सम्यग्दृगत्र ॥
कारुण्याढ्यो व्रताढ्योऽत्र च सकलयमो धर्मसध्यानकोऽत्र ॥
शुक्लध्यान्यत्र कर्मक्षपक इह वरः केवली सिद्ध एव ॥ ३२ ॥

विश्वलोकसारभूतं सिद्धपरमेष्ठिनं विषयीकुर्वतः सार इत्यस्यालङ्कारस्यान्वर्थसञ्ज्ञा ॥ इत्यर्थालंकारान् निरूप्येदानीं संसृष्टिसंकरौ कथ्येते । यथा लौकिकानां कनकमयानां च पृथक् पृथक् सौन्दर्यकराणामपि हाराद्यलंकाराणामन्योन्यसम्बन्धेन रम्यता दृश्यते तथैव रूपकादीनामलंकाराणामन्योन्यसम्बन्धेन रम्यतातिशयो गम्यते ॥ तिलतण्डुलन्यायेन संयोगरूपः क्षीरनीरन्यायेन समवायरूपश्चेति स च सम्बन्धो द्विधा । आद्येन न्यायेन संसृष्टिरन्त्येन संकरः ॥ शुद्धिरेकप्रधानत्वमेकालङ्कारप्राधान्यरूपा स्यादिति शुद्धिमिच्छन्ति संसृष्टिसंकरयोः पृथक्त्वं नेच्छन्ति । इह तु एतयोः पृथक्चा-

रुत्वातिशयकारणत्वेन पूर्वोक्तालंकारेभ्यः पार्थक्यम् ॥

तिलतण्डुलवच्छ्लेषा रूपकाद्या अलंक्रियाः ॥
यत्रान्योन्यं च संसृष्टिः शब्दार्थोभयतस्त्रिधा ॥ ३३ ॥

तिलतण्डुलन्यायेन रूपकादयो यत्र परस्परं संबद्धा भवन्ति सा संसृष्टिः ॥ तत्र शब्दालंकारसंसृष्टिर्यथा––

वन्दे चारुरुचां देव भो वियाततया विभो ॥
त्वामजेय यजेम त्वातमितान्त ततामित ॥ ३४ ॥

अत्र चित्रयमकयोः संसृष्टिः ॥ अर्थालंकारसंसृष्टिर्यथा—

रहस्सु वस्त्राहरणे प्रवृत्ताः । सहासगर्जाः क्षितिपालवध्वाः ॥
सकोपकन्दर्पधनुःप्रमुक्त- । शरौघहुंकाररवा इवाभुः ॥ ३५ ॥

उपमारसवदलंकारयोः संसृष्टिः ॥ शब्दार्थोभयसंसृष्टिर्यथा—

एतच्चित्रं क्षितेरेव घातकोऽपि प्रपादकः ॥
भूतनेत्र पतेऽस्येव शीतलोऽपि च पावकः ॥ ३६ ॥

घातकोऽपि हिंसकोऽपि पक्षे घातिकर्मणां विनाशकः । प्रपादकः प्रपालकः । भूतानां जीवानां नेत्रं चक्षुः तस्य सम्बोधनम् ॥ शीतलो भव्याल्हादकः दशमतीर्थंकरो वा । अग्निः पवित्रश्च । एतद्वचनं भूलोकस्य विरुद्धमेव ॥ परिहारपक्षे क्षितेरेव न तु विदुषः ॥ अत्र मुरजबन्धलक्षणचित्रालङ्कारविरोधालंकारयोः संसृष्टिः ॥

क्षीरनीरवदन्योन्यसम्बन्धा यत्र भाषिताः ॥
उक्तालंकृतयः सोऽयं संकरः कथितो यथा ॥ ३७ ॥
सजातीयविजातीयांगाङ्गीभावद्वयेन सः ॥
एकशब्दप्रवेशेन सन्देहेनेति च त्रिधा ॥ ३८ ॥
प्रत्यर्थिकुञ्जराश्चक्रिभटैः सिंहैरिवाहताः ॥
भूभृद्गुपोपरिन्यस्तक्रमैरुन्नतलंघिभिः ॥ ३९ ॥

अत्र सिंहैरिवेत्युपमालङ्कारेण प्रत्यर्थिकुञ्जरा इत्यत्र उपमा प्रसाध्यते इति सजातीययोरङ्गाङ्गीभावः ॥ कुञ्जरा इति प्रत्यर्थिन इति समामाश्रय-

णात् भूभृद्रप्रोपरीत्यत्र श्लेषमूलाऽतिशयोक्तिः॥

अरातिमहिषाः स्वैरं मज्जन्त्वत्रेति वा कृतः॥
तडागेऽजेन तत्कान्ताक्ष्यम्बुसिध्धक्रिभूतले॥ ३४०॥

मज्जन्तु तडागेऽत्रेति उत्प्रेक्षया अरातिमहिषा इत्यत्र रूपकं प्रसाध्यते इति विजातीययोरङ्गाङ्गीभावः॥

बहुतेजाः स्फुरत्कायः सर्वविद्योतनक्षमः॥
भानुमानिव रेजेऽसौ पुरुनन्दनचक्रभृत्॥ ४१॥

बहुतेजा इति शब्दसाम्येन श्लेषः। स्फुरदित्यादौ अर्थसाम्यादुपमा। तावुपमाश्लेषौ भानुमानित्येकस्मिन्नेव शब्दे अनुप्रविष्टाविति एकवाचकानुप्रवेशेन सङ्करः॥

श्रीमत्पार्थिवचन्द्रेण मुखपद्मेषु भूभुजाम्॥
किं भवेदिति तत्कान्ताश्चिन्तयन्ति स्म चेतसि॥ ४२॥

पार्थिवचन्द्रेण मुखपङ्क्तिष्वित्यत्र रूपकोपमयोस्संशयादिति सन्देहसंकरः। पार्थिव एव चन्द्रः चन्द्र इव पार्थिवः मुखान्येव पद्मानि पद्मानि मुखानीव इति समासद्वयसम्भवात्। स चात्र साधकं बाधकं वा प्रमाणं अन्यतरस्य नास्तीति सन्देह एव पर्यवसितः। साधकबाधकयोः सत्त्वे तु संदेहनिवृत्तिः॥

श्रीयशःपुण्डरीकाणि भरतस्यादिचक्रिणः॥
शेखरीचक्रिरे विश्वदिक्पाला अपि तोषतः॥ ४३॥

यशांस्येव पुण्डरीकाणीति रूपकालंकारे शेखरीचक्रिरे इति साधकप्रमाणम्। शेखरीकरणेन अभेदनिश्चयात्॥

शूरे रथांगभृत्सिंहे षट्खण्डेषु विराजति॥
तद्विपत्कुञ्जरा भीता नाकलोकमशिश्रयन्॥ ४४॥

सिंह इव रथाङ्गभृत् कुञ्जरा इव द्विषन्तः इत्युपमायाः शूरे भीताः इति बाधकं प्रमाणं। व्याघ्रादिभिर्गौणैस्तदनुक्ता इति। कोऽर्थः? येन गुणेन ते व्याघ्रादयः प्रवर्तन्ते स चेद्गुणः शब्देन न प्रतिपाद्यते तदा उपमेयवाचि सुबन्तमुपमानवाचिना व्याघ्रादिना पुरुषसिंह इव समस्यते। यदा तु स

गुणः शब्देन प्रतिपाद्यते तदा पुरुषव्याघ्रः शूर इति न भवतीति उपमा-समासनिषेधात् ॥ रथाङ्गभृदेव सिंहः द्विषन्त एव कुञ्जरा इति पारिशेष्याद्रू-पकालंकार एव ॥

वाक्यार्थस्तबके खण्डवाक्यार्थस्तबके ध्वनौ ॥
वाक्यार्थेऽपि पदार्थेऽपि दृष्टान्तादेरियं स्थितिः ॥ ३४५ ॥

वाक्यार्थस्तबके दृष्टान्तादयः ॥ खण्डवाक्यार्थस्तबके दीपकादयः ॥ ध्वना-वनुप्रासादयः ॥ वाक्यार्थे उपमोत्प्रेक्षादयः ॥ पदार्थे रूपकादयः ॥

इत्यलंकारचिन्तामणावर्थालंकारविवरणो नाम चतुर्थः परिच्छेदः ॥ ४ ॥

---

## श्रीवीतरागाय नमः ॥

॥ अथ पञ्चमपरिच्छेदः ॥

क्षयोपशमने ज्ञानाऽऽवृतिवीर्यान्तराययोः ॥
इन्द्रियानिन्द्रियैर्जीवे त्विन्द्रियज्ञानमुद्भवेत् ॥ १ ॥
तेन संवेद्यमानो यो मोहनीयसमुद्भवः ॥
रसाभिव्यञ्जकः स्थायिभावश्चिद्वृत्तिपर्ययः ॥ २ ॥
रतिहासशुचः क्रोधोत्साहौ भयजुगुप्सने ॥
विस्मयः शम इत्युक्ताः स्थायिभावा नव क्रमात् ॥ ३ ॥

सम्भोगगोचरो वाञ्छाविशेषो रतिः । विकारदर्शनादिजन्यो मनोत्थो हासः । स्वस्येष्टजनवियोगादिना स्वस्मिन्दुःखोत्कर्षः शोकः । रिपुकृतापकारिणश्चेतसि प्रज्वलनं क्रोधः । कार्येषु लोकोत्कृष्टेषु स्थिरतरप्रयत्न उत्साहः । रौद्रविलोकनादिना अनर्थाशङ्कनं भयम् । अर्थानां दोषविलोकनादिभिर्गर्हा जुगुप्सा । अपूर्ववस्तुदर्शनादिना चित्तविस्तारो विस्मयः । विरागत्वादिना निर्विकारमनस्त्वं शमः ॥

शृङ्गारादिरसत्वेन स्थायिनो भावयन्ति ये ॥
ते विभावानुभावौ द्वौ सात्त्विकव्यभिचारिणौ ॥ ४ ॥

नाटकादिषु काव्यादौ पश्यतां शृण्वतां रसान् ॥
विभावयेद्विभावश्चालम्बनोद्दीपनात् द्विधा ॥ ५ ॥
यानालम्ब्य रसो व्यक्तो भावा आलम्बनाश्च ते ॥
अन्योन्यालम्बनत्वेन दम्पत्यादिषु ते स्थिताः ॥ ६ ॥

रसस्योपादानहेतुरालम्बनभावः ॥ उदाहरणम् —

पादास्ताब्जा सुजंघास्तमदनशरधिश्चश्चदूर्वस्तरम्भा- ।
स्तंभा शुम्भन्नितम्बप्रजितमनसिजक्रीडनाद्रिः सुनाभि- ॥
प्रत्याख्यातस्मरक्रीडनवरसरसी श्रीकुचाद्यस्तसर्व-
कामश्रीस्सा सुभद्रा निधिपतिरभवत् तद्रतिः कैर्न वर्ण्यौ ॥ ७ ॥

उद्दीप्यते रसो यैस्ते भावा उद्दीपना मताः ॥
शृङ्गारादौ स्युरुद्यानचन्द्रिकासरआदयः ॥ ८ ॥

रसस्य निमित्तहेतुरुद्दीपनभावः ॥

गुणालङ्कारचेष्टाः स्युरालम्बनगतास्तथा ॥
तटस्थाश्चेति सम्प्रोक्ता चतुर्धोद्दीपनस्थितिः ॥ ९ ॥
आलम्बनगुणः कायवयोरूपादिशोभनम् ॥

उदाहरणम्—

मुक्तागुणच्छायमिषेण तन्व्याः । रसेन लावण्यमयेन पूर्णे ॥
नाभिहृदे नाथनिवेशितेन । विलोचनेनानिमिषेण जज्ञे ॥ १० ॥

मुक्तादामच्छविः । छायाशब्दस्य समासवशान्नपुंस्त्वे ह्रस्वत्वम् ॥ मिषेण व्याजेन ॥ रसेन अमृतेन । अनिमिषेण निमेषरहितेन मत्स्येन च जज्ञे जातम् ॥

हारनूपुरकेयूरप्रभृतिस्तदलंक्रिया ॥

उदाहरणम्—

अमर्षणायाः श्रवणावतंस- । मपांगविद्युद्विनिवर्तनेन ॥
स्मरेण कोशादवकृष्यमाणं । रथांगमुर्वीपतिराशशंके ॥ ११ ॥

अमर्षणायाः कटाक्षद्युतेः पुनर्व्यावर्तनेन रथांगं चक्रायुधम् ॥

तच्चेष्टा वयसा जातभावहावादिका यथा ॥
रहस्सु वस्त्राहरणे प्रवृत्ताः । सहासगर्जा क्षितिपालवध्वाः ॥
सकोपकन्दर्पधनुःप्रमुक्त-- । शरौघहुंकाररवा इवाभुः ॥ १२ ॥
पिकेन्दुमन्दवाताद्यास्तटस्थाः कथिता यथा ॥
चक्र्याश्लेषधियं कर्तुं विस्रस्तकुचवाससि ॥
वध्वां पारावतरतावच्छुकूज मणितध्वनीः ॥ १३ ॥
रसोऽनुभूयते भावैर्यैरुत्पन्नोऽनुभावकैः ॥
तेऽनुभावा निगद्यन्ते कटाक्षादिस्तनूद्भवः ॥ १४ ॥

उदाहरणम्—

श्रीमद्भिः सत्कटाक्षैर्मनसिजतरलैर्न्हीजडैर्दन्तकान्ति- ।
श्रीमन्मन्दप्रहासद्विगुणधवलिमश्रीभिरंगेषु लग्नैः ॥
श्रीवध्वा तत्सुसंगव्यपगमनभिया रज्जुभी राजतीभि- ।
र्बद्धो वाऽसौ रराजे शयनतलगतः सार्वभौमः सुसौम्यः ॥ १५॥
सत्त्वं हि चेतसो वृत्तिस्तत्र जातास्तु सात्त्विकाः ॥
स्युस्ते च स्पर्शनालापनितम्बस्फालनादिषु ॥ १६ ॥
रोमहर्षणवैस्वर्यस्वेदस्तम्भा लयोऽश्रु च ॥
कम्पो वैवर्ण्यमित्यष्टौ सात्त्विकाः परिभाषिताः ॥ १७ ॥

एषां स्वरूपमुदाहरणं च—

रोमाञ्चः पुलकोत्पत्तिः सुखाद्यतिशयाद्यथा ॥
पुलकव्याजतस्तं सा द्रष्टुं सर्वाङ्गदृक्त्वभूत् ॥ १८ ॥
वैस्वर्यं तद्गदालापः प्रमोदाद्युद्भवो यथा ॥
रत्यन्ते गद्गदोक्त्यर्थः स्मरेणापि न निश्चितः ॥ १९ ॥
रत्यातपादिसञ्जातः स्वेदस्तनुजलोद्गमः ॥
स्मरेण कीर्णपुष्पा (?) वा तदङ्गे घर्मबिन्दवः ॥ २० ॥
भीतिरागादिना स्तम्भः कायनिष्क्रियता यथा ॥
चक्रिलग्नदृशः कान्ताः प्रतिमा इव भित्तिगाः ॥ २१ ॥

सुखदुःखादिनाऽक्षाणां मूर्छनं प्रलयो द्दढम् ॥
चक्रयालोकनतः स्त्रीणां मूर्च्छतीन्द्रियसञ्चयः ॥ २२ ॥
दोषरोषातिदुःखाद्यैरश्रु नेत्रोदकं यथा ॥
वासगेहं गते नाथे स्नाताऽऽनन्दाश्रुभिः सती ॥ २३ ॥
भीरोषतोषणादिभ्यः कम्पोऽङ्गोत्कम्पनं यथा ॥
चक्रिभीतेऽब्धिगे शत्रौ तत्कम्पात्स च कम्पते ॥ २४ ॥
मदरोषविषादाद्यैर्वैवर्ण्यं भिन्नवर्णता ॥
चक्रचर्के भासमानेऽरेरास्यं ध्वान्तग्रहं व्यभात् ॥ २५ ॥
उद्भवन्त्यः प्रणशन्त्यो वीचयोऽब्धौ तथाऽत्मनि ॥
बहुधा सञ्चरन्तो ये भावाः सञ्चारिणो मताः ॥ २६ ॥
भीशंकाग्लानिचिन्ताश्रमधृतिजडतागर्वनिर्वेददैन्य- ।
क्रोधेर्ष्याहर्षिताव्यस्मृतिमरणमथोद्बोधनिद्रावहित्थाः ॥
तर्कह्यावेगमोहाः सुमतिरलसता भ्रान्त्यपस्माररोगाः ।
सुप्त्यौत्सुक्ये विषादो भवति चपलता ते त्रयस्त्रिंशदुक्ताः ॥ २७

एषां स्वरूपमुदाहरणं च ॥

भीराकस्मिकसन्त्रासाच्चित्तसंक्षोभणं यथा ॥
क्रीडन्ती सरसीशानं सा लिलिङ्ग घनध्वनेः ॥ २८ ॥
रोषादिकारणं शंकाऽनिष्टाभ्यागमशंकनम् ॥
मनोऽस्तीशिनि रोमाञ्चादालिभिः किमबोधि तत् ॥ २९ ॥

मनो मे पत्यौ निष्पन्दमास्ते तन्मनः सखीभिः पुलकैरवबुध्दं किमिति शंका ॥

वैवर्ण्यारतिहेतुर्या ग्लानिः शक्त्यपचेतृता ॥
भूभृज्जिष्णुसुपावकोरुयमरक्षःश्रीप्रचेतोजग- ।
त्प्राणश्रीदमहेडनेकपमहाभोगेशसत्कच्छपाः ॥
भर्त्तारः सकला भुवोऽपि विधिना ये स्थापितास्तेऽप्ययं
भर्त्तु र्नोरसि तं क्षमाऽस्मि कदलीगर्भातिमृद्वी ध्रुवम् ॥ ३० ॥

कुलपर्वताः भूपोषकाश्च । इन्द्रो जयशीलश्च । अग्निः पवित्रश्च । उरुःश्रा-वर्जीवधृतव्रतश्च । नैर्ऋतः रक्षतीति रक्षा श्रीर्यस्य । जरि जरस्त्वे वेति विकम्पितलुक्त्वात् । वरुणः प्रकृष्टं चेतो यस्य च । वायुः लोकं प्राणय-न्नुर्जीवयतीति च । अनेकानाश्रितान्पातीति । कं सुखं च्छतीति कच्छः दरिद्रस्तं पातीतिच । सर्वभुवां पालका धर्त्तारश्च ये त एव चक्री ॥

शून्यत्वतापकृच्चिन्ता स्वेष्टानभिगमस्मृतिः ॥
प्रियानुबद्धचित्ता सा न पश्यति न वक्ति च ॥ ३१ ॥
स्वेदोकर्षणकृत्खेदो मार्गरत्यादिजः श्रमः ॥
स्विन्नांग्यनिलवाञ्छाऽमाद्रतान्ते लुलितालका ॥ ३२ ॥

वासगेहाद्बहिर्गता ॥

बोधाभीष्टागमाद्येन मनोनिःस्पृहता धृतिः ॥
भरते कृतकृत्या सा मन्यते तृणवज्जगत् ॥ ३३ ॥
इष्टानिष्टागमोद्भूता जाड्यमप्रतिपत्तिधीः ॥
चक्रिण्यभ्यागते तुष्टा नाभ्युत्थानोपचारकृत् ॥ ३४ ॥
आत्मोत्कर्षोऽन्यधिक्काराद्गर्वः शौर्यबलादिजः ॥
ममाग्रे नृपकीटानां स्थितिः केति जयोऽगदीत् ॥ ३५ ॥
निर्वेदोऽफलधीर्दुःखेर्ष्यातत्त्वमज्ञतादितः ॥
दैन्यचिन्ताश्रुनिश्वासाः सम्भवन्त्यत्र तद्यथा ॥ ३६ ॥

कर्पूरेण कृतं हिमांशुकिरणैः किं चन्दनैः किं विसैः ।
पर्याप्तं मृगनाभिभिः किसलयैः किं मन्दवातैरलम् ॥
हारेणालमलं कुशेशयदलश्रीतालवृन्तेन किं ।
तं चक्रेश्वरमालि सर्वगुणिनं शीघ्रं त्वमाकारय ॥ ३७ ॥

कार्पण्यं स्यादनौद्धत्यं दैन्यं सत्त्वविमोचनम् ॥

नद पिकवर मा मा कूज पारावत त्वं ।
विरय सदुदयाद्यन्तस्त्वमिन्दो सुवाहि ॥
अनिल सखुरभे त्वं मेऽतिसंशिक्षयाशु ।

सार पदनतिमेम्यानेतुमाली गतेशम् ॥ ३८ ॥
क्रोधः कृतापराधेषु पुनः प्रज्वलनं यथा ॥
रे धावन्तु विदिक्षु दिक्षु यदि नो विक्षिप्यतेऽन्त्रोत्करः ।
श्रीकौक्षेयककुक्षिघोटनभवो भक्ष्येत पक्ष्यादिभिः ॥
इत्याद्युक्तिकठोरताप्रकटितक्रोधानलाः सद्भटा- ।
श्चक्रेशो द्विषतोऽखिलास्तत इतः संकम्पयन्ति स्म ते ॥ ३९ ॥
ईर्ष्या सा स्यात् परोत्कर्षासहिष्णुत्वं स्फुटं यथा ॥
तस्यां सर्वाऽपि सम्पत्तिः किमत्रागम्यते सर ॥ ४० ॥
स्वेदकम्पादिकृद्धर्षः प्रसादस्तूत्सवादितः ॥
कृतार्थोऽद्य भवाम्यस्य संगस्योत्सवतोऽचिरात् ॥ ४१ ॥
तर्जनादिकृदुग्रत्वं चण्डताऽऽगसि वीक्षिते ॥
खण्डिताधर गच्छेति तर्जितोऽस्याः पदे नतः ॥ ४२ ॥
स्मृतिः पूर्वानुभूतार्थविज्ञानं कथितं यथा ॥
चक्रिनित्यमहोरस्थश्रीसुखं कोऽनु वर्णयेत् ॥
यत्सकृत्परिरब्धाया मे सुखं वर्णनातिगम् ॥ ४३ ॥
मरणाय प्रयत्नो यः सा मृतिः कथिता यथा ॥
रथाङ्गवियोगासहा कामिनी सा । विधत्ते श्रुती कोकिलारावशक्ते ॥
दृशाविन्दुदृष्टी तनुं मन्दवायु- । स्पृशं घ्राणमम्भोरुहाघ्राणशक्तम् ॥४४॥
मद्यादिविहितो मोहहृष्टिव्यतिकरो मदः ॥
अयुक्तसञ्जल्पनवान् प्रमत्तः । सभ्रान्तिरस्या मधुपः सुवक्षः ॥
प्रविष्टवान्नागगतः सलीलं । यथा बिसिन्या मधुपोऽन्तरङ्गम् ॥ ४५ ॥
उद्बोधश्चेतनाप्राप्तिर्जृम्भाक्ष्युन्मीलनादिकृत् ॥
राज्युन्मिषन्ति सन्मार्गे गते कुवलयाश्रियः ॥ ४६ ॥
चेतोनिमीलनं निद्रा स्वप्नेक्षितनृपाधरम् ॥
व्यादत्ते चुम्बितुं स्वास्यं गगने मीलिताक्ष्यसौ ॥ ४७ ॥
अवहित्थाऽऽकृतेर्गुप्तिः —

हारच्छाविप्रेक्षणदम्भभाजि । प्रपश्यति प्रेमभरेऽधिनाथे ॥
कुचौ नतास्या हृदयातिहृष्टा । क्षौमाञ्चलेन स्थगितौ व्यधात्सा ॥

संशयाद्बहुकल्पना ॥

तर्कः संकोचनं चित्ते व्रीडा भङ्गकथादिभिः ॥ ४९ ॥

लक्ष्मीर्वक्षसि भारती च वदने बाह्वौ च वीरेन्दिरा ॥
कुत्रासा इति पृष्टया वरयशोदूत्या निधीनां पतेः ॥
सत्कायान्तरितीरितं न भणितस्तत्र प्रवेशक्रमः ।
कीदृक्षस्स कियान् कियत्सदवधिः कोऽयं क्वितीयं स्थिता ॥५०॥

त्रैलोक्यं धवलं मयाऽजनि तथाप्येषोऽमराद्रिश्छर्विं ।
हैमीं न त्यजतीति दुग्धजलधौ स्वांगं ह्रिया क्षालितम् ॥
नो चेज्जन्मसवेऽस्य वारिकलनात्सोऽद्रिर्वलक्षः कथं ।
कीर्तेरेवमाभिष्टुतौ निधिपतेरर्युत्तमाङ्गैर्नतम् ॥ ५१ ॥

चेतःसम्भ्रम आवेग इष्टानिष्टागमोद्भवः ॥

कृत्वा दिग्विजयं पुरीं प्रविशति [illegible] ।
वस्रस्तोरुकुचांशुका मणिमयस्तभं कराभ्यां धृतम् ॥
भीत्यभ्यर्णगतं स्वनायकमिव प्रोत्तुंगपीनस्तनी ।
श्रीकामागमवेदिनी वसुवधूरारुह्य तं प्रेक्षते ॥ ५२ ॥

भीदुःखावेशचिन्ताभिः स्यान्मोहो मूर्च्छनं यथा ॥

सम्प्रेक्ष्य दूतीश्चिरयत्यधीशे । तदेन्दुपादैः प्रहृता लतांगी ॥
सम्प्रेषिता सान्तसखीव तं ताः । सन्तर्जितुं मूर्च्छितमूर्तिरासीत् ॥

मतिरर्थविनिर्णीतिस्तस्वमार्गानुबन्धितः ॥

प्रतापश्चक्रिणः सोऽयं वह्निरेव न संशयः ॥
यत्प्रवेशनमात्रेण निर्दग्धा रिपुसन्ततिः ॥ ५४ ॥

अलसत्वं तु कर्तव्ये या मन्दोद्यमता यथा ॥

समास्तां गृहव्यापृतौ किंवदन्ती । स्वकार्योपचारेऽपि मन्दप्रयत्ना ॥
पिकीपंचमोक्तिश्रुतिप्रेरिता सा । बलात्कारतश्चक्रिकृत्ये प्रवृत्ता ॥ ५५ ॥

तुल्यवर्तनमुन्मादश्चेतनाचेतनेष्वपि ॥
चक्रध्यानकध्वनिभ्रान्ता मन्त्रयन्तेऽरयो द्रुमैः ॥ ५६ ॥
दुःखमोहादिना वेगोऽपस्मारः कायतापकृत् ॥
निधिपतिविरहिण्यः स्वप्नतो वीक्ष्य चन्द्र- ।
मुदयगिरिनिषण्णं रक्ष मा वीक्ष पांसून् ॥
इति वचनविधानाः सम्भ्रमोत्था द्रुतन्त्यः ।
स्वगृहभुवि सखीस्ता व्यस्तनाम्नाऽऽह्वयन्ति ॥ ५७ ॥
व्याधिर्ज्वराधिकस्तापश्चेतसोऽभिभवाद्यथा ॥
स्वर्गं गते चक्रिरणेऽरिवृन्दे। सह प्रया[ं]तु वनितास्तदीयाः ॥
जाज्वल्यमाने मदनज्वराग्नि- । कुण्डे पतन्ति स्म वपुर्निराशाः ॥ ५८ ॥
निद्रायास्तु समुद्रेकः सुप्तिः सा कथिता यथा ॥
राज्ये समस्तेऽरिजयान्निधीशा । सुस्थे रि[पु]स्त्रीश्वसितानिलेन ॥
क्षोभर्द्धियुक्तोऽपि तदक्षिवार्भिर्वार्धिर्मुरारेर्न भिनत्ति निद्राम् ॥ ५९ ॥
कालासहनमौत्सुक्यं चेतस्तापत्वरादिकृत् ॥
विनीता नगरीनार्यो विभूष्य कृतसम्भ्रमाः ॥
विलम्बितं सहन्ते स्म कृच्छ्रेण निधिपागमे ॥ ६० ॥
उपायापायचिन्ताभिर्विषादो भञ्जनं हृदः ॥
प्रेषितं चित्तमाह्वातुं लग्नं तत्रैव चक्रिणि ॥
न स्मरो याति मां मुक्त्वा कर्तव्यं किन्नु भोः सखि ॥ ६१ ॥
द्वेषरागादिसम्भूता चापल्यं त्वनवस्थता ।
विलोक्य चक्रिणं कान्ता लोलदृङ्मृदुहासिनी ॥
काञ्चीव्यावर्तिनी कर्णपत्रसंस्पर्शनी स्थिता ॥ ६२ ॥

सात्त्विका व्यभिचारिणश्चानेकरससाधारणत्वेन सामान्यापेक्षयोदाहृताः। तत्र विशेषः कथ्यते ॥ शृङ्गारे ते सर्वे सम्भवन्ति। हास्येऽवहित्थाग्लानिश्रमचापल्यहर्षाः ॥ करुणे हर्षमदगर्वधृतिव्रीडाभ्रान्त्यौत्सुक्यरहिताः शेषाः ॥ रौद्रे शंकाग्लानिदैन्यालस्यचिन्ताव्रीडावेगविषादजडतानिद्रासुप्तिभयापस्मारावहि-

त्यारोगोन्मादहीनाः शेषाः ॥ वीरे निर्वेदसहिता रौद्रोक्ताः सर्वे ॥ भयानके धृतिमदव्रीडागर्वसुप्तिनिद्राहर्षावहित्थामतीर्ष्योग्रतारहिताः शेषाः ॥ बीभत्सेऽद्भुते च भयचिन्तादयो यथासम्भवमूह्याः ॥ शान्ते धृतिनिर्वेदौ ॥

रसभावाभिनेतृत्वेऽधिकृते नर्तके रसाः ॥
भावा न किन्तु सभ्येषु स्मृतपूर्वरसादिषु ॥ ६३ ॥

उद्देशक्रमाभावेऽपि रसनिरूपणस्य भावनिरूपणपूर्वत्वात् भावा उक्ताः ॥ अथ दशावस्थाः शृङ्गाररसस्य अङ्कुरितत्वपल्लवितत्वहेतवः कथ्यन्ते ॥

रत्युल्लाससमुद्भवाः खलु दशावस्थाश्च चक्षुर्मनः- ।
प्रीत्यासक्तियुगं पुनर्भुवि तथासङ्कल्पको जागरः ॥
सम्प्रोक्ता तनुता तथा च विषयद्वेषस्त्रपानाशनं ।
मोहो मूर्च्छनमप्यतो मृतिरिति प्रोक्ता दशा विच्युतैः ॥ ६४ ॥

आदरप्रेक्षणं यत्र चक्षुःप्रीतिर्यथा पुनः ॥
सक्तिर्मुहुर्मुहुश्चिन्ता प्रतिकृत्यादिभिर्यथा ॥ ६५ ॥
अधरस्तननाभ्यन्तश्रोणीचरणवीक्षणैः ॥
परावृत्तेक्षितैश्चक्रे सा तस्य स्मरदीपनम् ॥ ६६ ॥
त्वद्रूपसाम्यमनसा करिसत्करौ च ।
मेरोः प्रवाहशिखरे शशिनं च पद्मम् ॥
मेरुं नितम्बसुभगं विलिलेख कान्ता ॥
त्वां लज्जिता मम पुरो विलिखन्त्यपीयम् ॥ ६७ ॥
वाञ्छा शुभप्रियावाप्तौ संकल्पो भणितो यथा ॥
निद्राक्षयः प्रियाऽलाभादनिशं जागरो यथा ॥ ६८ ॥
तावारूढौ च दुर्मोचप्रेमबन्धौ मनोरथम् ॥
दुर्लभाश्लेषसम्भोगफललाभार्थमर्थिनौ ॥ ६९ ॥

कामिनी विरहतल्पवाब्रवी- । दित्यसौ निशि सुजागरादपि ॥
आलि मां रविशशाङ्कसुतापिनीं । रक्ष रक्ष नृपसीतभानुना ॥७०॥

कामज्वरेण कायस्य तापनं तनुता यथा ॥

भिन्नवस्त्वसहिष्णुत्वं विषयद्वेषणं यथा ॥ ७२ ॥
नीलाब्जखण्डनृपते वनितेन्दुरेखा । तन्वंगिनी विबुधनुत्यमृतप्रपाना ॥
पक्षद्वयेऽपि विरहात्परिवृद्धिहीना । किं ते मनःकुमुदमीप्सति सुप्रवेष्टुम् ॥
सङ्गीतसङ्गिरमसौ सुनिशम्य भीता ।
सख्यास्यदर्पणयुगं न च पश्यतीयम् ॥
मुग्धा न निश्वसिति कोकिलचन्द्रबिम्ब- ।
मन्दानिलाशयगता नृप मन्मथार्ता ॥ ७३ ॥
अपानाशो गुरुत्वस्यागणनान्मानमोचनम् ॥
मनोवैकल्यतो मोहः स्यादुन्मादो यथा द्वयम् ॥ ७४ ॥
मन्दानिले वहति गुञ्जति च द्विरेफे ।
मत्ते निकूजति पिके कलकूजनाढ्ये ॥
पारावते च नृप सा विजहाति मानं ।
गन्तुं पदे तव समिच्छति मन्मथार्ता ॥ ७५ ॥
माकन्दमञ्जुललतामवलम्ब्य मुग्धा ।
जल्पे हि पश्य वचनादनुनीय खिन्ना ॥
आनेतुमक्षमतया गलदश्रुनेत्रा ।
कोपेन सा वसति भो वरचक्रपाणे ॥ ७६ ॥
मूर्च्छा सेन्द्रियवैकल्यान्मुहुरज्ञातृता यथा ॥
प्राणहानिः प्रियालाभात्तत्क्षणं च मृतिर्यथा ॥ ७७ ॥
आमीलिताम्बकयुगा मलयोद्भवोरु- ।
चर्चा स्खलत्प्रलपिता गलितोरुहारा ॥
मूर्च्छायुता कलयते सुरतान्त्यसौख्यं ।
श्रीराजराज वनिता परिरभ्यतां सा ॥ ७८ ॥
अत्रान्तरे यदि न गच्छसि तत्समीपं ।
श्रीब्रह्मसूनुनृपते मदनः कृशाङ्गीम् ॥
नेष्यत्यशेषवनितातिलकायमाना- ।

मन्त्यां दशां सुमशरप्रतिजर्जराङ्गीम् ॥ ७९ ॥

प्रलापसंज्वरयुक्ता द्वादशावस्था इति केचिदिच्छन्ति ॥

प्रियस्य गुणसंलापः प्रलापः कथितो यथा ॥
विरहात्तनुसन्तापः संज्वरः कथितो यथा ॥ ८० ॥
कलासु निपुणः सौम्यो मधुरोक्तिर्मनोहरः ॥
स राजराज एवेति वचोगोष्ठी वधूष्वभूत् ॥ ८१ ॥
मोघीकृतमृणालादिशीतोपचरणा वधूः ॥
विरहज्वरसन्तप्ता त्वन्मुखेन्दुं नृपेच्छति ॥ ८२ ॥
रसं जीवितभूतं तु प्रबन्धानां ब्रुवेऽधुना ॥
विभावादिचतुष्केण स्थायी भावः स्फुटो रसः ॥ ८३ ॥
नवनीतं यथाऽऽज्यत्वं प्राप्नोति परिपाकतः ॥
स्थायिभावो विभावाद्यैः प्राप्नोति रसतां तथा ॥ ८४ ॥

अथ रसविशेषः ॥

शृंगारो हास्यकरुणौ रौद्रवीरभयानकाः ॥
बीभत्साद्भुतशान्ताश्च रसाः स्थायिक्रमान्नव ॥ ८५ ॥
पोष्यते या रतिर्भावैः स शृंगाररसो मतः ॥
सम्भोगविप्रलम्भाख्यभेदाभ्यां स द्विधा मतः ॥ ८६ ॥
सम्पदन्वितयोः कान्ताकामिनोर्युक्तयोर्मिथः ॥
सम्भोगः सन्निकर्षस्यादुरुसौख्यप्रदो यथा ॥ ८७ ॥
मुरारिरपि रुक्मिणीतनुलताद्विरेफस्तदा ।
चिरं रमितया तया रमितरम्यमूर्तिर्निशि ॥
अशेत शयनस्थले मृदुनि गूढगूढाङ्गना- ।
घनस्तनभुजाननस्पर्शलब्धनिद्रासुखः ॥ ८८ ॥

सम्भोगस्यान्योन्यदर्शनस्पर्शनसञ्जल्पनचुम्बनालिङ्गनाद्यनेकव्यापारमयत्वेन बहुत्वादेकविधत्वेन गणना कृता ॥ अथालम्बनभेदाद्भेदः —

प्रच्छन्नश्च प्रकाशश्च सम्भोगः स द्विधा मतः ॥

पण्याङ्गनायामन्यः स्यादनूढादिषु चादिमः ॥ ८९ ॥
स्वकीया परकीया च तथाऽनूढा पणाङ्गना ॥
आद्या त्रिवर्गिणश्चान्याः केवलस्मरसेविनः ॥ ९० ॥
बन्धुपित्रादिसाक्ष्येण स्वकीया स्वकृता वधूः ॥
दयाशौचक्षमाशीलसत्यादिगुणभूषिता ॥ ९१ ॥
अनुरक्ते सुरक्ते न स्वीकृते स्वयमेव ये ॥
अनूढापरकीये ते भाषिते शिथिलव्रते ॥ ९२ ॥
अपि द्वे ते अनूढे च वाच्यभेदोऽस्ति चानयोः ॥
प्रियमाल्यैव वक्त्येका स्वयमन्याऽपि कामुकी ॥ ९३ ॥

प्रियं वल्लभं उपपतिं एका अनूढा आल्यैव सखीमुखेनैव वक्ति ॥ अन्या परकीया अतिकामुकी सती स्वयमपि प्रियं वक्ति ॥

साधारणांगना वेश्या कपटोक्तिर्धनप्रिया ॥
मत्यार्पितस्वर्सात्कारनाट्यगीतादिवेदिनी ॥ ९४ ॥
अभिलाषादिभिर्भेदैर्विप्रलम्भोऽप्यनेकधा ॥
उदाहरणमेतेषामवस्थासु विलोक्यताम् ॥ ९५ ॥

स्वाधीनपतिकाद्यष्टावस्थासु ॥

हासाख्यः स्थायिभावो यो विभावाद्यैः प्रपोष्यते ॥
विदूषकाद्यैरालम्बैः प्रोक्तो हास्यरसो यथा ॥ ९६ ॥

कन्तोः शास्त्रमधीत्य कोऽपि वृषलः पीनस्तनीं स्वस्त्रियं ।
केदारान्त्यगतां निधाय पशुवत् तद्योनिमाघ्राय च ॥
व्यादास्यमुपर्यवेक्षितरदः स्तावत्परेणायता ।
गोवद्वृत्तिमता भुजेन निहतस्तत्तद्रतं दृष्टवान् ॥ ९७ ॥

तन्मुग्धत्ववेदिनाऽन्येन वृषलेन आगच्छता एकस्मिन्पशौ गामारोहति सति अन्यः समागत्य तं निहत्य स्वयमारोहति यथा तथा वर्तमानेन निहत्य निष्कासितः तयोः पशुवद्वृत्तं दूरतो दृष्टवान् ॥

अत्रोद्दीपनभावाः स्युस्तत्वालापकरक्रियाः ॥

भावकेष्वनुभावाःस्युरक्षिविस्फालनादयः ॥ ९८ ॥
सात्त्विका अश्रुवैवर्ण्यवैस्वर्याद्या निरूपिताः ॥
कपोलाक्षिविकासि स्यादुत्तमे मृदुभाषणम् ॥
विदीर्णास्यशिरःकम्पि मध्यमे हसितं मतम् ॥ ९९ ॥
शिरःकम्पाश्रुमत्कायचलं सद्रुग्बिन्दुकम् ॥
आनन्दशपनध्वानमधमे हसितं मतम् ॥ १०० ॥
पुष्टः शोको विभावाद्यैः स एव करुणो द्विधा ॥
इष्टनाशादनिष्टाप्तेर्जातिरालम्बनं यथा ॥ १ ॥

हा जगत्सुभग हा जगत्पते । हा जनाश्रयण हा जनार्दन ॥
हाऽपहाय गतवानसि क मां । हाऽनुजेहि लघु हेति चारुदत् ॥ २ ॥

इष्टस्य विष्णोर्नाशेनात्र ॥

हा निधीश करुणाकर त्वया । मोच्यतां मम पतिः कुधीरयम् ॥
त्वद्भटेन विहितासिपञ्जरे । लग्नविग्रहतयाऽतिदुःखितः ॥ ३ ॥

अत्रानिष्टस्यासिपञ्जरलग्नत्वस्य प्राप्त्या ॥

स्वजनाक्रन्दनाद्याः स्युर्भावा उद्दीपना इह ॥
अनुभावा विलापोष्णनिश्वासरुदितादयः ॥ ४ ॥
सात्त्विकास्तम्भवैवर्ण्यवैस्वर्याश्रुमुखा मताः ॥
क्रोधः पुष्टो विभावाद्यैः स रौद्ररसतां गतः ॥ ५ ॥
हस्ताभ्यां किमु मृद्गामि पूर्ववैरिणमेनकम् ॥
खगेभ्यो नखनिर्भिन्नं खे बलिं विकिरामि किम् ॥ ६ ॥
अत्रालम्बनभावाः स्युर्नराद्या द्वेषगोचराः ॥
तद्व्यापाराभिलाषाद्या भावा उद्दीपना मताः ॥ ७ ॥
अनुभावाः शिरोक्ष्योष्ठभ्रुकुटीस्पन्दनादयः ॥
सात्त्विकाः स्वेदवैवर्ण्यवैस्वर्यप्रमुखा मताः ॥ ८ ॥
उत्साहो यो विभावाद्यैः पुष्टो वीररसो मतः ॥
सोऽपि दानदयायुद्धभेदेन त्रिविधो यथा ॥ ९ ॥

अन्यागोचरसम्पदस्ति मम तां यत्तां च सत्साधवो ।
नो गृह्णन्ति महाश्रमी च कतमः पूज्यो महासम्पदा ॥
ये साणुव्रतवृत्तयो गृहिवरास्ते तर्पणीया धनै- ।
रित्याचिन्त्य धनित्वमेषु कृतवाँश्चक्रयन्यजन्मन्यपि ॥ ११० ॥
श्रेयोमार्गानभिज्ञानिह भवगहने जाज्वलद्दुःखदाव- ।
स्कन्धे चंक्रम्यमाणानतिचकितमिमानुद्धरेयं वराकान् ॥
इत्यारोहत्परानुग्रहरसविलसद्भावनोपात्तपुण्य- ।
प्रक्रान्तैरेव वाक्यैः शिवपथमुचितान् शास्ति योऽर्हन्स नोऽव्यात् ।
यत्तेजोऽनलदग्धनाकपतिगाद्यब्धिस्थदेवाधिपा ।
यत्पादद्युतिवारिसिक्तशमिता मेघस्वराख्यां गतः ॥
तद्यत्तां मम गर्जितेन पतिता भूमौ कुलक्ष्माभृत- ।
श्चक्रेट्सन्निभमेरुमात्ररहिताः श्लाघाऽन्यघातेन का ॥ १२ ॥
आलम्बस्तत्त्रये पात्रदीनवैरित्रयं क्रमात् ॥
उद्दीपो दानसुस्तोत्रदानोक्त्याजिस्वनादयः ॥ १३ ॥
अनुभावः प्रसादोऽस्वग्रहोऽन्ये पुलकादयः ॥
भीः पुष्टा या विभावाद्यैर्भयानकरसो यथा ॥ १४ ॥
चक्रिवैरिनितम्बिन्यः सूच्यभेद्यतमस्ततौ ॥
गुहायां नेत्रभाभारं तमोहरममुञ्चत ॥ १५ ॥
वैरिभल्लूकसर्पाद्या भावा आलम्बना मताः ॥
उद्दीपना विभावास्तु मतास्तद्गर्जितादयः ॥ १६ ॥
अनुभावा दिगालोककण्ठशोषस्खलद्गिरः ॥
अष्टौ च सात्त्विकाः सर्वे दैन्याद्या व्यभिचारिणः ॥ १७ ॥
जुगुप्सैव च तैः पुष्टा स बीभत्सरसो द्विधा ॥
जुगुप्स्यालोकवैराग्यभेदाभ्यां स मतो यथा ॥ १८ ॥
नृप त्वत्पादसेवाविमुखरिपुगणस्त्वत्कृपाणप्रघात- ।
प्रोद्भूताहःस्रवच्छोणितसहितमहापूतिपूयार्द्रकायः ॥

नीराज्यो यत्र तत्र प्रसवति जनता दुर्जुगुप्स्यश्च तस्मा- ।
त्तस्मान्निष्काषितोऽभूत्तनुमलकलितो विसयन् सर्वकाष्ठाः ॥ ११९ ॥
वर्चोगृहं विषयिणां मदनायुधस्य ।
नाडीव्रणं विषमनिर्वृतिपर्वतस्य ॥
प्रच्छन्नपातुकमनङ्गमहाहिरन्ध्र- ।
माहुर्बुधा जघनरन्ध्रमधः सुदत्याः ॥ १२० ॥
आलम्बनविभावा ये जुगुप्स्यपुरुषादयः ॥
उद्दीपनविभावाः स्युर्व्रणगन्धादयस्त्विह ॥ २१ ॥
नासाच्छादनवेगाद्या अनुभावास्तु सात्त्विकाः ॥
पुलकाद्यास्तु निर्वेदप्रमुखा व्यभिचारिणः ॥ २२ ॥
विभावाद्यैस्तु यः पुष्टो विस्मयः सोऽद्भुतो यथा ॥
चक्रे नेत्रे च सूतोऽपरपरसमयो वाजिनः सूतभेदाः ।
सूताभिन्नो रथी च त्रिजगति नियता ज्या रथो वायुतत्त्वम् ॥
बाणः स्थेमस्थसूतो मनसिजजनकः कार्मुकं सूतदृश्यं ।
स्वादृश्यं लक्ष्यचक्रं रणमिदमवतु प्रस्तुतं प्राणिवृन्दम् ॥ २३ ॥

नेत्रे दृष्टी भेदाभेदसम्यक्त्वे च । अपरपरसमयः पूर्वापरकालः ॥ अपरस्य स्वमतस्य परस्य परमतस्य समयो ज्ञानं श्रुतज्ञानमित्यर्थः ॥ सूतभेदाः श्रुतविकल्पा शुद्धाशुद्धसद्भूतासद्भूतनिश्चयव्यवहारा नयाश्चत्वारः॥ सूताभिन्नः श्रुतात्कथंचिदभिन्नो भाविजिनः॥ त्रिजगति नियता सर्वत्र नियमेन वृत्ता दया। वायुतत्त्वं वायोरिव निस्सङ्गत्वमात्मनः स्वरूपं। स्थेमस्थसूतः स्थिरतरश्रुतबोधः ध्यानमित्यर्थः ॥ मनसिजजनकः विष्णुः पक्षे मनसिजो विशुद्धिपरिणामस्तदुत्पादकश्चित्तविशेषः विशिष्टं मन इत्यर्थः ॥ सूतदृश्यं श्रुतज्ञानग्राह्यं । स्वादृश्यं स्वेन रथिना ध्यात्राऽदृश्यं कर्म चक्षुराद्यगोचरत्वात् ॥

शास्त्रिणां चित्तचमत्कारि वस्त्वालम्बनमीरितम् ॥
उद्दीपनविभावोऽस्य महोजल्पादिवर्णनम् ॥ २४ ॥
अनुभावाः कपोलाक्षिविकासाद्यास्तु सात्त्विकाः ॥

प्रस्वेदपुलकाद्याःस्युः प्रोक्ता हर्षादयः परे ॥ २५ ॥
शमः पुष्टो विभावाद्यैरेव शान्तरसो यथा ॥
पुत्रं पौत्रं कलत्रं श्रियमपि निखिलां प्राणिनां भ्रान्तिहेतुं ॥
मुक्त्वा लोलायमानं कपिवदपि मनः श्रीपुरोरंघ्रियुग्मे ॥
रुध्वाऽऽर्हन्त्यं सुखाढ्यं कलुषततिहरं भावयन्पापशत्रुं ।
जेतुं कोणे वसामि क्वचिदुरुशमतः किं परैः पापिसङ्गैः ॥ २६ ॥
आलम्बनविभावाः स्युरार्हन्त्यपदवीमुखाः ॥
उद्दीपनास्त्वनेकान्तशास्त्रसम्भाषणादयः ॥ २७ ॥
अनुभावोऽत्र माप्येत सर्वत्र समदर्शिता ॥
निष्पन्दतादयः सूक्ताः सात्त्विका मुनिसत्तमैः ॥ २८ ॥
निर्वेदो धृतिरुद्बोधस्तर्कः स्मृतिमती तथा ॥
इति सञ्चारिणो भावाः स्युः शान्तरसनायके ॥ २९ ॥
उभौ शृङ्गारबीभत्सौ द्वौ च वीरभयानकौ ॥
उभौ रौद्राद्भुतौ हास्यकरुणौ वैरिणौ मिथः ॥ १३० ॥
शृङ्गारजनितो हास्यो रौद्रोत्थः करुणो मतः ॥
अद्भुतो जायते वीराद्बिभत्साच्च भयानकः ॥ ३१ ॥
शान्तः सर्वोत्कृष्टत्वात् केनचिन्मैत्रीं विरोधं च न लभते ॥
जीवस्य पारिणामत्वान्न रसो रक्ततादिभाक् ॥
तथाऽपि काव्यमार्गेण कथ्यते तत्क्रमोऽधुना ॥ ३२ ॥
श्यामाभो विष्णुरिन्दुद्युतिरिभवदनस्त्विट्कषायो यमो वै ॥
रक्तो रुद्रोऽपि गौरत्विडपि सुरपतिर्धूम्रवर्णो महादिः ॥
कालो नीलश्च नन्दी कनकरुचिरजः शुभ्रवर्णः परादि- ।
ब्रह्मा शृङ्गारमुख्ये क्रमत इह मतो वर्णभेदोऽधिदैवम् ॥ ३३ ॥
गुणसंश्लिष्टशब्दौघसन्दर्भो रीतिरिष्यते ॥
त्रिविधा सेति वैदर्भी गौडी पाञ्चालिका तथा ॥ ३४ ॥
मुक्तसन्दर्भपारुष्याऽनतिदीर्घसमासिका ॥

उज्झिता कठिणैः शब्दैर्वैदर्भी भणिता यथा ॥ ३५ ॥
प्राज्ञः प्राप्तसमस्तशास्त्रहृदयः प्रव्यक्तलोकस्थितिः ।
प्रास्ताशः प्रतिभापरः प्रशमवान्प्रागेव दृष्टोत्तरः ॥
प्रायः प्रश्नसहः प्रभुः परमनोहारी पराऽनिन्दया ।
ब्रूयाद्धर्मकथां गणी गुणनिधिः प्रस्पष्टमृष्टाक्षरः ॥ ३६ ॥
ओजःकान्तिगुणापूर्णा या सा गौडी मता यथा ॥
श्रीमन्नम्रसुरासुराधिपचलन्मौलिप्रभास्वन्मणि- ।
श्रेणीश्राणितसन्तताघ्यविभवो यत्पादपीठीतटः ॥
वाचोयुक्तिविविक्तवस्तुविसरो दुष्कर्मनिर्मूलनो ।
जीयात्सूरिसुभाषितार्जितमहः सोऽयं जिनेन्द्रप्रभुः ॥ ३७ ॥
उक्तरीत्युभयात्मा तु पाञ्चालीति मता यथा ॥
न स्नेहाच्छरणं प्रयान्ति भगवन्पादद्वयं ते प्रजा ।
हेतुस्तत्र विचित्रदुःखनिचयः संसारघोरार्णवः ॥
अत्यन्तस्फुरदुग्ररश्मिनिकरव्याकीर्णभूमण्डलो ।
ग्रैष्मः कारयतीन्दुपादसलिलच्छायानुरागं रविः ॥ ३८ ॥

प्रसादादिसर्वगुणपूर्णा असमस्ता द्वित्रिपदसमस्ता वा वर्गद्वितीयाक्षरप्रचुरा स्वल्पघोषाक्षरा वैदर्भी ॥ समस्ताऽत्युद्भटपदा महाप्राणाक्षरा कान्त्योजोगुणा गौडी ॥ समस्तपञ्चषपदा ओजःकान्तिसौकुमार्यमाधुर्यान्विता पाञ्चाली ॥ सकलरीतिसम्मिश्रा मृदुसमासा बहुयुक्ताक्षररहिता स्वल्पघोषाक्षरा लाटी । इति रीतिचतुष्टयमिच्छन्ति केचित् तदपि ज्ञेयम् ॥

अथ शय्यापाकौ कथ्येते ॥

पदानुगुण्यरूपा या मैत्री शय्येति कथ्यते ॥
पाकोऽर्थानां गभीरत्वं द्राक्षापाकोऽपरो द्विधा ॥ ३९ ॥
प्रावृट्काले सविद्युत्प्रपतितसलिले वृक्षमूलाधिवासा ।
हेमन्ते रात्रिमध्ये प्रतिविगतभयाः काष्ठवत्त्यक्तदेहाः ॥
ग्रीष्मे सूर्यांशुतप्ता गिरिशिखरगतस्थानकूटान्तरस्था ।

स्ते मे धर्मं प्रदद्युर्मुनिगणवृषभा मोक्षनिश्रेणिभूताः ॥ ४० ॥

अत्र बन्धस्य पदविनिमयासहत्वेन पदान्योन्यमैत्रीरूपा शय्या ॥

द्राक्षापाकः स भण्येत बाह्याभ्यन्तःस्फुरद्रसः ॥

स्यान्नालिकेरपाकोयमन्तर्गूढरसो यथा ॥ ४१ ॥

रहस्सु वस्त्राहरणे प्रवृत्ताः । सहासगर्जाः क्षितिपालवध्वाः ॥

सकोपकन्दर्पधनुःप्रमुक्त- । शरौघहुंकाररवा इवाभुः ॥ ४२ ॥

श्रेयोमार्गानभिज्ञानिह भवगहने जाज्वलद्दुःखदाव- ।

स्कन्धे चङ्क्रम्यमाणानतिचकितमिमानुद्धरेयं वराकान् ॥

इत्यारोहत्परानुग्रहरसविलसद्भावनोपात्तपुण्य- ।

प्रक्रान्तैरेव वाक्यैः शिवपथमुचितान्शास्ति योऽर्हन्स नोऽव्यात् ४३

अत्र न शीघ्रमर्थप्रतीतिः ॥ एवं वस्त्वलङ्कारप्रतिपत्तावपि पाकद्वयमिदं द्रष्टव्यम् ॥ पुनरन्येऽपि पाका यथासम्भवमूह्याः ॥ अथ सामग्री निरूप्यते ॥

शोभा साहायकश्रित्प्रकृतय इव चोत्कर्षदा रीतय स्युः ।

शौर्याद्या वा गुणाः स्युः पदसदनुगुणच्छेदरूपा तु शय्या ॥

शय्येऽवालङ्क्रियाश्चाभरणवदपि वा वृत्तयो वृत्तये वा ॥

पाकाः पाकारसास्वादनभिद इति सत्काव्यसामग्र्यसौ स्यात् ॥ ४४

साहायकं श्रिता शोभा आत्मोत्कर्षावहाः स्वाभा इव रीतयः शौर्यादय इव श्लेषादयो गुणाः शय्येव पदानुगुण्यविश्रान्तिः शय्या ॥ अर्थनिरूपणात्पूर्वं वचनं विचार्यते ॥ तत्र

शब्दः पदं च वाक्यं च खण्डवाक्यं तथा पुनः ॥

महावाक्यमिति प्रोक्तं वचनं काव्यकोविदैः ॥ ४५ ॥

विभक्त्युत्पत्तियोग्यो यः शास्त्रीयः शब्द उच्यते ॥

रूढयौगिकमिश्रेभ्यो भेदेभ्यः स त्रिधा पुनः ॥ ४६ ॥

शास्त्रीय इति शङ्खकाहलादिध्वनिनिवृत्तिः ॥ एतावता लिङ्गधातुस्वरूप-प्रकृतिः शब्दः ॥ रूढो यथा—

निर्योगास्फटयोगाभ्यां योगाभासात्रिधाऽऽदिमः ॥
ते च भूवादिवृक्षादिमण्डपाद्याः क्रमान्मताः ॥ ४७ ॥

प्रकृतिप्रत्ययविभागो योग इष्यते । यस्मादर्थे शब्दो युज्यते स योग इति व्युत्पत्तेः ॥ निर्योगो भूवादिः । न हि सत्तायां कयाचिद्व्युत्पत्त्या भूधातुः प्रवर्तते ॥ योगः क्वचिद्विद्यमानोऽप्यस्फुटः । स हि वृक्ष इत्यत्र आतपं वृश्चतीति व्युत्पत्तिः कस्यचिज्जायते ॥ योगाभासो मण्डपादिः ॥ मंडं पिबतीति विद्यमानाऽपि व्युत्पत्तिरर्थासङ्गतेराभासरूपा ॥ मण्डपायित्वान्मण्डपो न हि । अपितु मडु भूषायां मण्डनं मण्डः तं पातीति व्युत्पत्तिर्वरं घटते ॥

शुद्धतन्मूलसम्भिन्नभेदैस्त्रेधा स यौगिकः ॥
ते च स्थितिलसद्दीप्तिमार्कण्डेयादयः क्रमात् ॥ ४८ ॥

स्थानं स्थितिरित्यत्र शुद्धो योगः ॥ निर्योगः प्रकृतिप्रत्ययोत्पन्नत्वात् ॥ लसद्दीप्तिरिति यौगिकमूलः । लसद्दीप्तिशब्दाभ्यां शुद्धयौगिकाभ्यां निष्पादितत्वात् ॥ अयं तु विशेषः ॥ समासशब्दे प्रकृतिमात्रजन्यो योगः । अथवा प्रत्ययोपयोगस्तत्राप्यस्ति ॥ मार्कण्डेयशब्दस्तु सम्भिन्नः ॥ मृकण्डवा अपत्यमिति योगस्य अव्यक्तयोगमूलमृकण्डुशब्दनिष्पाद्यत्वात् ॥ रूढयौगिकयोर्मिश्रं लक्षयति ॥

तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवृत्तितः ॥
जलधिर्जलजं दुग्धवारिधिःस्वर्गभूरुहः ॥ ४९ ॥

अन्योन्यमिति कोऽर्थः? सामान्यस्य विशेषतया परिवृत्तितः विशेषस्य तु सामान्यरूपतया ॥ अयमेक एव भेदः परिवृत्तिद्वयं तु हेतुवशात ॥ तत्र जलानि धीयन्तेऽस्मिन्निति योगस्य सामान्याश्रयत्वेऽपि विशेषपरिवृत्त्या समुद्र एव न तटाकादिः। जलजशब्देन तु पद्ममेव न शाल्यादिः॥ द्वितीयपरिवृत्तिं वक्ति । वारिधारणविशेषस्य सामान्यरूपतया परिवृत्तौ वारिधिशब्देन समुद्रमात्रमुच्यते ॥ दुग्धवारिधिरित्यत्र यदि दुग्धमयस्तत्कथं वारिधिरिति न विरोधदोषावकाशः ॥ एवं यदि स्वर्गप्रभवस्तत्कथं भूरुह इति ॥

सुबन्तं पदं पदं। पदव्यूहोऽर्थसमाप्तितो वाक्यम् ॥ उदाहरणम्—कैलासाद्रौ मुनीन्द्रः पुरुरपदुरितो मुक्तिमाप प्रणूतः ॥ अर्थसमाप्तियुक्तार्थतामुक्तपदव्यूहः खण्डवाक्यम्। अर्थसमाप्तिमुक्त इत्यनेन वाक्यनिरासः। युक्तार्थतामुक्त इत्यनेन समासपदनिरासः ॥ समासोपयुक्तः परस्परान्वयविशेषो युक्तार्थता ॥ उदाहरणम्— देवानां प्रिय इति एतच्च पदमलुक्समासादेकमेव न खण्डवाक्यम् ॥ चम्पायां वासुपूज्य इत्यादीनि खण्डवाक्यानि मुक्तिमापेत्यन्वय एव वाक्यानीति स्थितिः ॥ एकार्थविश्रान्तान्यनेकानि वाक्यानि महावाक्यम् ॥ उदाहरणम्—

चन्द्रप्रभं नौमि यदङ्गकान्तिं। ज्योत्स्नेति मत्वा द्रवतीन्दुकान्तः ॥
चकोरयूथं पिबति स्फुटन्ति। कृष्णेऽपि पक्षे किल कैरवाणि १५०

वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधोऽर्थः। वाचकलक्षकव्यञ्जकत्वेन शब्दानां त्रैविध्यात् ॥ व्यङ्ग्यार्थ एव तात्पर्यार्थः। न पुनश्चतुर्थः ॥ शब्दवृत्तयस्त्रिधा अभिधालक्षणाव्यञ्जनाभेदात् ॥ लक्षणाविशेष एव गौणवृत्तिः। तयोस्सम्बन्धमूलत्वाविशेषात् ॥ गङ्गा मुख्यस्तटो लक्ष्यो व्यंग्यः शीतलादिकम् ॥ सिंहो माणवक इति केचिदिच्छन्ति ॥ अत्र तु मुख्यो वाच्य एव ॥ सिंहो माणवक इति सादृश्यसम्बन्धविशिष्टमाणवकप्रतीतेगौंणो लक्ष्य एव ॥ सङ्केतितार्थविषया शब्दव्यापृतिरभिधा। सा रूढादिभेदात्सूक्ता। वाच्यार्थघटनेन तत्सम्बन्धिनि समारोपितशब्दव्यापारो लक्षणा ॥ सा द्विधा सादृश्यहेतुका सम्बन्धान्तर्हेतुका चेति ॥ सम्बन्धान्तर्हेतुकाऽपि द्विधा। जहद्वाच्या अजहद्वाच्या चेति ॥ सादृश्यहेतुका द्विधा। सारोपा साध्यवसाया चेति ॥ एवं लक्षणा चतुर्धा ॥ तत्र जहल्लक्षणा यथा—

उत्पन्ने पुरुदेवेऽत्र त्रिलोकीरक्षणक्षमे ॥
नृत्यद्गायज्जगज्जातं रोमहर्षणजृम्भितम् ॥ ५१ ॥

जगतोऽचेतनस्य नाट्यगानरोमाञ्चासम्भवाद्वाच्यस्याभावः ॥ अजहल्लक्षणा यथा—

पुरोः समवसृत्यन्तराश्रितं सिंहविष्टरम् ॥

अलञ्चक्रुः किरीटानि नानारत्नमरीचिभिः ॥ ५२ ॥

अत्र अलङ्कारसिद्ध्यं किरीटैराश्रयभूता इन्द्रादयो लक्ष्यन्ते ॥ विषयविषयिणोरुक्तयोरभेदनिश्चितिरारोपः सारोपलक्षणा यथा—

चक्रिकण्ठीरवः शौर्यसम्पदन्वितविग्रहः ॥
परिपन्थिमहादन्तिनिवहभ्रमणं व्यधात् ॥ ५३ ॥

अध्यवसायो विषयनिगरणेनाभेदप्रतीतिः । साध्यवसायलक्षणा यथा—

इक्ष्वाकुकुलवारीशिवृद्धये शिशिरद्युतिः ॥
अभूदेष प्रजातोषकरणक्षमसत्कलः ॥ ५४ ॥

भरतेश इन्दुत्वेनाध्यवसीयते । इक्ष्वाकुकुलवारीशीत्यारोपश्च ॥ अनुगतेषु वस्तुषु वाक्यार्थोपस्काराय भिन्नार्थगोचरः शब्दव्यापारो व्यञ्जनावृत्तिः । सा त्रिधा । शब्दशक्तिमूला अर्थशक्तिमूला उभयशक्तिमूलेति क्रमेण यथा—

वाहिन्यो व्यासमेदिन्यश्चक्रिणः कृतसम्भ्रमाः ॥
कबन्धापूर्णमातेनुः प्रत्यर्थिबलवारिधिम् ॥ ५५ ॥

अत्र अर्थप्रकरणादिना वाहिनीकबन्धशब्दयोरिरसनायां च्छिन्नमस्तकक्रियायुक्तशरीरपूर्णत्ववाचकतया नियमेऽपि शब्दशक्तिमूलेति निम्नगाजलं प्रतीयत इति व्यञ्जनावृत्तिः ॥ अभिधा तु प्रकृतार्थपर्यवसिता अप्रकृतार्थं ज्ञापयितुं न शक्नोति। अप्रकृतार्थस्यापि वाक्यार्थे शोभायै कविना विवक्षणीयत्वात् । अर्थतस्तदप्रतिपत्तेः शब्दस्यैव व्यापारो व्यञ्जनाख्यः ॥

श्रीमत्समन्तभद्राख्ये महावादिनि चागते ॥
कुवादिनोऽलिखन्भूमिमङ्गुष्ठैरानताननाः ॥ ५६ ॥

कुवादिनो विषण्णा इत्यर्थशक्त्या व्यज्यते ॥ अर्थशक्तिमूलव्यञ्जनायामनुमानशङ्का न कर्तव्या । व्यङ्ग्यव्यञ्जकयोरविनाभावित्वासम्भवात् ॥ भूलेखनन्नतत्वादिकार्याणां विषाद एव कारणमिति नियमाभावात् ॥

अनन्तद्योतनस्सर्वलोकभासकविग्रहः ॥
आदिब्रह्मजिनः सर्वश्लाघ्यमानमहागुणः ॥ ५७ ॥

अनन्तं सुरवर्त्म खमिति अनन्तद्योतनो रविः ॥ पक्षे अनन्तबोध इति

व्याख्यानादनन्तद्योतन इत्यत्र शब्दशक्तिमूलत्वम् ॥ सर्वलोकभासकविग्रहः सर्वश्लाघ्यमानमहागुण इत्यर्थशक्तिमूलत्वमित्युभयशक्तिमूलः पुरुरव्योरुपमालङ्कारध्वनिः ॥

रसावस्थानसूचिन्यो वृत्तयो रचनाश्रयाः ॥
कौशिकी चारभट्यन्या सात्वती भारती परा ॥ ५८ ॥

वृत्तयस्तु चतस्रो रचनाश्रितत्वेन रसावस्थितिसूचिताः। रसरहितवर्णनरचनाया दोषत्वेन प्रसिद्धं रचनाया अपि रसव्यञ्जकत्वम् ॥

द्वावत्यन्त्यसुकोमलौ च करुणः शृङ्गार इत्याव्हयौ।
द्वौ बीभत्सरसोऽपि रौद्र इति तावत्युद्धतौ भाषितौ ॥
ईषत्प्रौढरसौ भयानकरसो वीरोऽपि सम्भाषितौ।
स्युः किञ्चित्सुकुमारभावनियता हास्यश्च शान्ताद्भुतौ ॥ ५९ ॥

अत्यन्तमृदुसन्दर्भैः शृङ्गारकरुणौ रसौ ॥
वर्ण्येते यत्र धीमद्भिः कौशिकीवृत्तिरिष्यते ॥ १६० ॥

वृषभनृपतिकायः कान्तसूरांशुहारी।
मृदुललिततनूनां लोचनैः कामिनीनाम् ॥
स्थलमृदुलसरोजैः सारगन्धं किरद्भिः।
सुरधरणिधरो वा सम्बभौ हेमकान्तिः ॥ ६१ ॥

वर्ण्येते रौद्रबीभत्सौ रसौ यत्र कवीश्वरैः ॥
अतिप्रौढैस्तु सन्दर्भैर्भवेदारभटी यथा ॥ ६२ ॥

स्फूर्जच्छात्रवविच्छिदारुडनलज्वालौघमावर्षता।
स्फूर्जत्खड्गविघट्टनोद्भवलसत्स्फारस्फुलिङ्गव्रजैः ॥
गर्जन्मेघनिभेभरूढवपुषा श्रीमज्जयेन द्विष-।
श्छिन्नाङ्गाः स्रवदस्रजालकलिताः भूताद्यजीर्णं व्यधुः ॥ ६३ ॥

ईषत्प्रौढौ निरूप्येते यत्र वीरभयानकौ ॥
अनतिप्रौढसन्दर्भात्सात्वतीवृत्तिरुच्यते ॥ ६४ ॥

विश्वलाणसमर्थजेतृनिधिपप्रस्थानभेरिध्वनिं।

श्रुत्वा घोरमहाशनीथितममी प्रत्यर्थिनः पार्थिवाः ॥
सन्त्रासज्वरपूर्णकर्णबधिराः शीघ्रं गताश्चक्रभृ- ।
च्चेजोदुन्दुभिनादबाडवमहानिर्घोषमप्यम्बुधिम् ॥ ६५ ॥
हास्यशान्ताद्भुता ईषत्सुकुमारा निरूपिताः ॥
यत्रेषत्सुकुमारेण सन्दर्भेण हि भारती ॥ ६६ ॥

त्वं शुद्धात्मा शरीरं सकलमलयुतं त्वं सदानन्दमूर्तिः ।
देहो दुःखैकगेहं त्वमसि सकलवित्कायमज्ञानपुञ्जम् ॥
त्वं नित्यश्रीनिवासः क्षणरुचिसदृशाशाश्वतैकाङ्कमङ्कं ।
मा गा जीवात्र रागं वपुषि भज निजानन्दसौख्योदयं त्वम् ॥६७॥

मध्यमारभटी मध्यकौशिकी द्वे इमे पुनः ॥
वृत्ती रसेषु सर्वेषु स्यातां साधारणे मते ॥ ६८ ॥
अनतिप्रौढसन्दर्भो मृदुलार्थेऽपि मध्यमा ॥
कौशिकी विपरीताऽतो मध्यमारभटी यथा ॥ ६९ ॥

ईषत्प्रौढरचना अतिसुकुमारयोः शृङ्गारकरुणयोर्न दुष्यति किन्त्वतिकठिण-रचना मध्यमारभटी ॥ अतिप्रौढयोरपि रौद्रबीभत्सयोरल्पसुकुमारसन्दर्भो न दुष्यति । किंत्वतिमृदुरचना विरुध्यते ॥ मध्यमकौशिकी यथा—

सखीसभायां चतुरङ्गकेलौ । चुचुम्ब संरक्षितुमाददतस्य ॥
हयस्य याच्ञा कपटेन कामी । मुहुर्मुहुः स्मेरमुखीं कपोले ॥७०

मध्यमारभटी यथा—

यस्यासिधाराविनिपातभीता- । स्त्यजन्तु पद्माकरसङ्गमानि ॥
विमुक्तवन्तः किल राजहंसाः । स्वमुत्तराशाश्रितमानसं च ॥ ७१ ॥

एवं रसेषु सर्वत्रोदाहार्यम् ॥ वैदर्भीप्रभृतिरीतीनामर्थविशेषनिरपेक्षत्वेन शब्दगुणाश्रयाणां केवलरचनासौकुमार्यप्रौढत्वमात्रगोचरत्वात् कौशिक्या-दिवृत्तिभ्यो भेदः । असंयुक्तकोमलाक्षरबन्धोऽतिसुकुमारसन्दर्भ उच्यते ॥ परुषाक्षरविकटबन्धत्वमतिप्रौढत्वम् ॥ संयुक्तसुकुमारवर्णत्वमीषन्मृदुत्वम् । इषत्प्रौढत्वमविकटसन्दर्भपरुषवर्णता ॥ शोभामाह—

शोभा सिद्धोऽपि चेद्दोषो गुणसूक्त्या निषिध्यते ॥
वृथा निन्दति संसारं यत्र चक्री प्रपूज्यते ॥ ७२ ॥

सिद्धोऽपि संसारस्य दोषो भरतेशप्रपूजागुणसंकीर्तनेन निषिध्यते ॥

गौणागौणास्फुटत्वेभ्यो व्यंग्यार्थस्य निगद्यते ॥
काव्यस्य तु विशेषोऽयं त्रेधा मध्यो वरोऽधरः ॥ ७३ ॥

व्यंग्यस्यामुख्यत्वेन मध्यमकाव्यं गुणीभूतव्यंग्यमित्युच्यते ॥ प्राधान्ये उत्तमं काव्यं ध्वनिरितीष्यते ॥ अस्फुटत्वे अधमं तत् चित्रमिति निरूप्यते ॥ तथाहि ।

षट्खण्डभूमीवनितां नवोढा- । मालोकमाने निधिपे सुपीठे ॥
तिष्ठत्यशेषैरवनीश्वरैस्त- । त्कार्यं व्यधायि प्रमदोऽस्य येन ॥ ७४ ॥

लब्धराज्याभिषेकस्य भरतेशिनोऽग्रेऽवनिपानां शरणार्थिनां स्वोचितकार्पण्यवचनं प्रणमनादिकं व्यंग्यं तत्कार्यं व्यधायीति वाच्यादतिशयाभावेन गुणीभूतव्यंग्यत्वम् ॥

चन्द्रस्य निष्कलस्याब्धेर्गाधस्य कुलभूभृताम् ॥
नीचैः किं करणेनेति सृष्टश्चक्री विरञ्चिना ॥ ७५ ॥

चक्रिणश्चन्द्रातिशायि सकलकलापूर्णत्वमम्बुध्यतिशायि गाम्भीर्यं कुलाचलातिशायि समुत्तुंगत्वं च व्यज्यते ॥ कलानिधिजलनिधिकुलाचलनिर्माणसम्भ्रमातिशायितश्चक्रिनिर्माणविभवः सर्वसम्भर्वीति व्यज्यते ॥ चित्रं शब्दार्थोभयभेदेन त्रिधा यथा—

किं मर्माण्यभिनन्न भीकरतरो दुष्कर्मगर्मद्रुणः ।
किं दुःखज्वलनावलीविलसितैर्नालेहि देहश्चिरम् ॥
किं गर्जद्यमतूर्यभैरवरवं नाकर्णयन्निर्णयं ।
येनायं न जहाति मोहविहितां निद्राममन्दां जनः॥ ७६ ॥

अर्थचित्रं यथा—

---

१ वनमक्षिकाणां समूहः ।

निपीड्य लक्ष्मीमपहृत्य चक्रिरे। ठकाः स्वकं जीवनमात्रशेषकम् ॥
अपीदमायान्त्यपहर्तुमित्यगा– । दपांनिधिर्वेपथुमूर्मिभिर्न तु ॥ ७७ ॥
जन्माभिषेकाय क्षीरानयनार्थं सुरेष्वागच्छत्सु सत्सु वारिधिरेवमभूत् ॥
अरिष्टहर्म्यस्य सवज्रवेदे- । र्बालाङ्कनीलद्युतिपूरितस्य ॥
मध्ये विरेजुर्नवदीपमाला । माला मणीनामिव वारिराशेः ॥ ७८ ॥
अनुप्रासोपमाभ्यामुभयाचित्रता ॥ ध्वनिविशेषं न ब्रूमो विस्तरत्वात् ॥
संयोगादिभिरनेकार्थवाचकः शब्दोऽभिधामूलः अवाच्यं व्यनक्तीति व्यञ्जनविशेष उच्यते ॥

संयोगोऽर्थविरोधिते प्रकरणं स्यात् विप्रयोगौचिती ।
सामर्थ्यं स्वरसाहचर्यपरशब्दाभ्यर्णताव्यक्तयः ॥
देशो लिङ्गमतोऽपि काल इह चेष्टाद्याः कवीनां मताः ।
शब्दार्थेष्वनवाच्छिदे स्फुटविशेषस्य स्मृतेर्हेतवः ॥ ७९ ॥
सदम्भोलिर्हरिर्भातीत्यस्त्रसंयोगतःसुरेट् ॥
स स्याद्वादे जिनः सेव्य इत्यर्थादार्हती मतिः ॥ १८० ॥
हरिः पद्मविरोधीती विरोधाच्चन्द्रमा मतः ॥
मां वेत्ति देव इत्युक्तेः प्रस्तुतात्सत्यता गतिः ॥ ८१ ॥
अपविर्हरिरित्यस्त्रायोगात्कृष्णः प्रतीयते ॥
औचित्यात्स जिनोऽव्याद्व इति सम्मुखता गतिः ॥ ८२ ॥
कोकिलो रौति चेत्युक्तिसामर्थ्यान्मधुमासधीः ॥
वेदे स्वरेण काव्येऽर्थधीर्न चेति कुदृष्टयः ॥ ८३ ॥
साहचर्येण कृष्णः स्यात्सीरिमाधवयोरिति ॥
राजा सज्योत्स्न इत्यस्य शब्दसान्निध्यतो विधौ ॥ ८४ ॥
अभान्मित्रमिति व्यक्त्या सुहृदो निश्चयो मतः ॥
अभान्मित्र इति व्यक्त्या सूर्यमण्डलनिश्चयः ॥ ८५ ॥
देवोऽत्र भाति चेत्युक्ते देशादवनिपस्मृतिः ॥
अंगजो मीनकेतुः स्यादिति लिङ्गात्स्मरस्मृतिः ॥ ८६ ॥

विभाति सवितेत्युक्ते रात्रौ चेज्जनको मतः ॥
दिवसे चेद्रविः कालादर्थो निश्चियते बुधैः ॥ ८७ ॥
एतन्मात्रकुचेत्युक्ते चेष्टयाऽर्थविनिश्चितिः ॥
वस्त्वपि व्यापृतं तस्य व्यंजकं सहकृत्त्वतः ॥ ८८ ॥
नीरेजैश्च निमीलद्भिर्नीडं गच्छद्भिरण्डजैः ॥
उत्पलैर्विकद्भिश्च स्यादस्तंगतसूर्यधीः ॥ ८९ ॥

इति व्यंग्यादिभणितिः ॥

गुणानां भेदं सूचयन्तो दोषाः कथ्यन्ते ॥

काव्यहीनत्वहेतुर्यो दोषः शब्दार्थगोचरः ॥
स शब्दार्थगतत्वेन द्वेधा संक्षेपतो मतः ॥ ९० ॥

पदवाक्यगतत्वेन शब्दगतोऽपि द्विधा ॥ तत्र पदगतदोषा निरूप्यन्ते ॥

नेयाऽपुष्टनिरन्यगूढपदपूर्वार्थं विरुद्धाशयं ।
ग्राम्यं क्लिष्टमयुक्तसंशयगताश्लीलाप्रतीतं च्युत- ॥
संस्कारं परुषाविमृष्टकरणीयांशं तथाऽ योजक- ।
मन्यच्चास्ति तथा समर्थमिति ते सप्तोत्तराःस्युर्दश ॥ ९१ ॥
नेयार्थं तु स्वसंकेतरचितार्थं मतं तथा ॥
विकासयति नीरेजानिवहं गरुडध्वजः ॥ ९२ ॥

गरुडध्वज इत्युक्ते विष्णुः स च हरिः हरिरित्युक्ते सूर्य इति ॥

प्रस्तुतानुपयोग्यार्थमपुष्टार्थं मतं यथा ॥
द्वादशार्द्धार्द्धनेत्राणि कल्पितानि महेश्वरे ॥ ९३ ॥

त्रीणि लोचनानीति प्रस्तुते द्वादशार्द्धार्द्धनेत्राणीत्यनुपयोगः ॥

यत्पादपूरणायैव निरर्थकमिदं यथा ॥
अहं जिनेश्वरं वन्दे तु हि वै च महाधियम् ॥ ९४ ॥
प्रच्युतं व्यक्तरूढेर्यत्तदन्यार्थं मतं यथा ॥
विदग्धधर्मसद्भावो मिथ्यादृष्टिरभूदयम् ॥ ९५ ॥

विदग्धशब्देन विशेषेण दग्धधर्मास्तित्वस्य अवचनात् विद्वानिव धर्म-

वानिति वचनात् ॥

यदुक्तमप्रसिद्धार्थे तद्बुद्धार्थमिदं यथा ॥

मित्रोदयोऽब्जसङ्घातं विकासयति सर्वतः ॥ ९६ ॥

मित्रशब्दः सुहृदर्थे प्रसिद्धः सूर्ये दुष्यति ॥

विपरीतार्थधीकारि यद्विरुद्धाशयं यथा ॥

भूतलोपकृदादीशः प्रबभौ तीर्थकृज्जिनः ॥ ९७ ॥

भूतानां जीवानां लोपं करोतीति विरुद्धार्थमतिकृत् ॥

यत्पामरप्रयोगे तु प्रसिद्धं ग्राम्यमिष्यते ॥

योषितो गल्लमालोक्य दर्पणं स्मरति स्म सः ॥ ९८ ॥

गल्लशब्दस्य कपोलवाचकतया ग्राम्यप्रयोगः ॥

यत्रार्थनिश्चयो दूरदूरः क्लिष्टमिदं यथा ॥

जिनो रात्वीश्वरापीडसमुत्पत्तिस्थलोद्भवाम् ॥ ९९ ॥

ईश्वरस्यापीडचन्द्रसमुत्पत्तिस्थलं समुद्रस्तत्र जातां लक्ष्मीमित्यतिदूरत्वम् ॥

कविभिर्न प्रयुक्तं तदप्रयुक्तं मतं यथा ॥

प्रमाणाः पुरुषाः सर्वे स्याद्वादन्यायवेदिनः ॥ २०० ॥

प्रमाणा इति कविप्रयोगाभावः ॥

अर्थसंदिग्धकारि स्यात्तत्सान्दिग्धमिदं यथा ॥

जायते नितरां क्रीडा नितम्बेषु महीभृताम् ॥ १ ॥

राज्ञां स्वस्त्रीजघनेषु क्रीडा वा आहोस्विद्गिरीणां सानुष्विति संशयात्

जुगुप्सामङ्गलव्रीडाधीकृदश्लीलकं त्रिधा ॥

सोऽध उत्सर्गवाँस्तंत्रःकृतान्तस्य महात्रिकः ॥ २ ॥

अधोगतिवर्जितः शास्त्रकृत्परः महानत्रिमुनिः ॥ पक्षे अध उत्सर्ग इत्यत्र अधोवायुप्रतीतेर्जुगुप्सा ॥ कृतान्तस्य तन्त्र इत्यत्र यमाधीनत्वप्रतीतेरमाङ्गल्यं महात्रिक इति पृष्ठवंशाधरे त्रिकमिति प्रतीतेर्व्रीडा ॥

शास्त्रेणैव प्रसिद्धं तदप्रतीतमिदं यथा ॥

प्रशस्तौघ इवारीणां प्रशमाय क्षमो निर्धीद् ॥ ३ ॥

प्रशस्तौघः असंयतादिगुणस्थानमिति ओघ आगममात्रप्रसिद्धः ॥

विरुद्धं शब्दशास्त्रेण च्युतसंस्कारमीरितम् ॥
वन्दन्ति भक्तिभारेण नम्रा देवा जिनेश्वरम् ॥ ४ ॥

परुषाक्षरक्लृप्तं यत्तु परुषं कथितं यथा ॥
उर्वर्तिर्नोपदेष्ट्रा स्यात्स्रष्ट्रा धर्मान्निरूपितात् ॥ ५ ॥

अविमृष्टविधेयांशं विधेयगुणता यथा ॥
व्यर्थप्रतापशत्रूणां कथं वृत्तिस्तु सह्यते ॥ ६ ॥

प्रतापस्य व्यर्थत्वेन मुख्यतया विधेये तस्य गौणत्वं प्रतीयते ॥

विशेषावचनं यत्तदप्रयोजकमुच्यते ॥
तत्त्वोपदेशतः पूर्वं मिथ्यादृष्टिं जिनं नमः ॥ ७ ॥

सुखप्रदं जिनं नम इति प्रकृते तत्त्वोपदेशश्रवणात्पूर्वं मिथ्यादृष्टिमिति विशेषणेन विशेषाकथनात् ॥

प्रयुक्तं यौगिकादेवासमर्थमिह तद्यथा ॥
अम्भोधरस्तावन्त्तगम्भीरो भरतेश्वरः ॥ ८ ॥

अम्भोधरशब्दः समुद्रवाचकत्वेनासमर्थः ॥

छन्दोरीतियतिक्रमांगरवसम्बन्धार्थसन्धिच्युतं ॥
व्याकीर्णं पुनरुक्तमास्थितिसमासं सर्गलुप्तं तथा ॥
वाक्याकीर्णसुवाक्यगर्भितपतत्प्रोत्कृष्टताप्रक्रम- ॥
भंगन्यूनपरोपमाधिकपदं भिन्नोक्तिलिंगे तथा ॥ ९ ॥
समासपुनरात्तं चापूर्णमित्येवमीरिताः ॥
चतुर्विंशतिधा वाक्यदोषा ज्ञेयाः कवीश्वरैः ॥ २१० ॥

छन्दोभङ्गवदुक्तिर्या छन्दोभ्रष्टमिदं यथा ॥
जिनेश्वरं वंदामहे भव्यबन्धुं त्वां विभवम् ॥ ११ ॥

रसानुरूपरीतिर्नो यत्र रीतिच्युतं यथा ॥
अखण्डचण्डदोर्दण्डमण्डिता हा मृता इमे ॥ १२ ॥

करुणेऽक्षराडम्बरमनुचितम् ॥

विश्रान्तिभ्रंशनं यत्र यतिभ्रष्टमिदं यथा ॥
जिनेशपद्युग्मं वन्दे भक्तिभरसन्नतः ॥ १३ ॥
शब्दो वाऽर्थोऽक्रमो यत्र क्रमभ्रष्टमिदं यथा ॥
सुप्त्वा स्नात्वा गुरुं नत्वा जिनं कश्चित्प्रवन्दते ॥ १४ ॥

अर्थाक्रमः ॥

गम्भीरिमोन्नतिद्वन्द्वे मग्नौ मेरूदधी अपि ॥

शाब्दोऽक्रमः । गम्भीरत्वे उदधिरौन्नतत्वे मेरुरिति शब्दक्रमाभवात् ॥ गम्भीरिमौनत्ययोर्मेरूदधी इति यथौचित्यमर्थान्वये सिद्धे अर्थविरोधो न किन्तु शाब्द एव क्रमभंगः ॥

क्रियापदेन हीनं यदशरीरं मतं यथा ॥
भीतानरीन्त्रयांगेशः षट्खण्डपरिरक्षकः ॥ १५ ॥
अबद्धशब्दवाक्यं यच्छब्दहीनमिदं यथा ॥
सुखं संगच्छते नात्र विषयान्ध्याच्च्युतव्रतः ॥ १६ ॥

सुखं न संगच्छते इति पदद्वयप्रयोगे दोषनिश्चयाद्वाक्यदोष एव न पददोषः ॥ सम्पूर्वस्य गम्धातोरात्मनेपदत्वे कर्मकारस्याग्रहणनीयमानत्वात् ॥

अनन्वयमिहोक्तं यत्तत्सम्बन्धच्युतं यथा ॥
पीठं शिला भटो राजा प्रतापो भूमिरन्धकः ॥ १७ ॥
वक्तव्यं यत्र यन्नोक्तं वाच्यच्युतमिदं यथा ॥
मतं जीवितमस्माकं दुश्चेष्टावशवर्तिनाम् ॥ १८ ॥

दुश्चेष्टावशवर्तिनामपीति अपिशब्दे वक्तव्ये नोक्तः ॥

सन्ध्यभावो विरूपो वा सन्धिच्युतमिदं यथा ॥
विद्या इह अमुत्र त्वां पातु स्वेष्टमुपे जिनः ॥ १९ ॥

सुसमर्थो हर्षायाभवादित्यर्थे स्वेष्ट इति सन्धिविरूपता ॥

मिथोऽन्वये विभक्तीनां कीर्णे व्याकीर्णमिष्यते ॥
पुरोरूक्त्यमृतं पश्यन्पिबन्नाननमास्थितः ॥ २२० ॥

वाक्सुधां पिबन्नास्यं पश्यन्नित्यन्वयः ॥

वाक्यं शब्दार्थयोः पौनरुक्त्ये तत्पुनरुक्तिकम् ॥
भात्यास्थाने विभुः सायमास्थानविहितस्थितिः ॥ २१ ॥

समासो नोचितो यत्र ह्यपदस्थसमासकम् ॥
कुतोऽस्मासु विधिर्दुर्दृगिति रक्ताम्बकाननाः ॥ २२ ॥

कुतोऽस्मासु विमुखो विधिरिति ब्रह्मणे कुप्यतां रिपूणां वचने न समासः ॥ अपि तु कविवचने समासः कृत इत्यस्थानस्थसमासः ॥

विसर्गो बहुधा यत्र लोपमोत्वं च वाऽप्नुयात् ॥
प्रोक्तं लुप्तविसर्गं तद्वाक्यदोषविदा यथा ॥ २३ ॥

मनोहरो मनोभीष्टो वरो धर्मो जिनोदितः ॥
पूज्या वन्द्या वरा वीरा गण्या वीरा जिना इमे ॥ २४ ॥

पूर्वार्द्धे ओत्वं विसर्गस्य बहुधाऽन्यत्र तु लोपः ॥

अन्यवाक्यपदाकीर्णं वाक्यं तत्संकीर्णमिष्यते ॥
खड्गः प्राप्नोति तद्बाहौ यशो बाभाति दिक्तटम् ॥ २५ ॥

यशो दिक्तटं प्राप्नोति तद्बाहौ खड्गो बाभातीति वाक्यद्वयपदानां परस्पर-संकीर्णता ॥

यस्य वाक्यान्तरं मध्ये भवेत्तद्वाक्यगर्भितम् ॥
जिनेनोक्तो विधुः खेऽभाद्धर्मो रक्षति विष्टपम् ॥ २६ ॥

जिनेनोक्तो धर्मो लोकं पातीति वाक्यमध्ये खे विधुरभादिति भिन्नवाक्य-प्रवेशः ॥

पतत्प्रकर्षमेतत्स्यात्प्रकर्षो विश्लथो यथा ॥
धावदेणे चलद्व्याघ्रे विन्ध्यारण्येऽरयास्थिताः ॥ २७ ॥

सञ्चलद्व्याघ्रे पलायमानहरिणे इति वक्तव्ये न तथोदितम् ॥

प्रारब्धनियमत्यागि भिन्नप्रक्रमकं यथा ॥
गुञ्जा मुक्ता लताः कान्ता विध्यारण्यं पुरं द्विषाम् ॥ २८ ॥

बहुवचनत्वेन प्रारम्भे विध्यारण्यं पुरमित्येकवचने प्रक्रमभङ्गः ॥

न्यूनं यत्रोपमानं तन्न्यूनोपममिदं यथा ॥

स्त्रीबाहुनखपीडोऽरिर्वने कण्टकभेदवान् ॥ २९ ॥

स्ववध्वा बाहुभ्यां नखैः सम्पीडितश्चाक्रिणोऽरिः तद्भयादरण्ये कण्टकैः पीड्यत इत्यत्र नखस्थाने कण्टकवचनं बाहुस्थाने किमपि नोक्तमिति न्यूनोपमात्वम् ॥

उपमानाधिकत्वं तदधिकोपमकं यथा ॥

म्लानास्याऽरिवधूर्ग्रीष्मे म्लानाऽब्जोत्पलसिन्धुवत् ॥ ३० ॥

म्लानवक्त्रायाश्चक्रिरिपुयोषितः उपमाभूतायां नद्यां म्लानाब्जमात्रं वक्तव्यं म्लानोत्पलमित्यधिकम् ॥

वाक्येऽधिकपदानि स्युर्यत्राधिकपदं यथा ॥

धर्मं प्रणयति प्राज्यं धर्मराजस्तथागतः ॥ ३१ ॥

लिङ्गोक्ति चोपमाभिन्ने भिन्नलिङ्गोक्तिकद्वयम् ॥

मनो गम्भीरमब्धिर्वा हारस्ते निर्झरा इव ॥ ३२ ॥

समाप्तपुनरात्तं स्यात्समाप्तस्वीकृतिः पुनः ॥

बहुदुःखास्पदेऽरण्ये तिष्ठामः क्रूरभल्लुके ॥ ३३ ॥

बहुदुःखास्पदेऽरण्ये तिष्ठाम इति समाप्य क्रूरभल्लुक इति पुनः स्वीकारात् ॥

क्रियान्वयो न सम्पूर्णो यत्रापूर्णमिदं यथा ॥

श्वभ्रेऽस्माकं स्थितिः क्रूरैः सत्त्वान्पश्यन् जिनः स्थितः ॥ ३४ ॥

नारकक्रूरबान्धवान् नरकवासानस्मान्पश्यन्निति वक्तुमिष्टौ न सम्पूर्णः ॥

एकापव्यर्थभिन्नाऽक्रमपरुषगतालंकृतीन्यप्रसिद्ध- ।

सादृश्यं हेतुशून्यं विरससहचरभ्रष्टके संशयाढ्यम् ॥

अश्लीलं चातिमात्रंविसदृशसमताहीनसामान्यसाम्ये ।

लोकाद्युक्त्या विरुद्धं स्युरिति कविमतेऽष्टादशैतेऽर्थदोषाः ॥३५॥

अभिन्नार्थकमुक्तेन यदेकार्थमिदं यथा ॥

तुष्टः पीनस्तनीं दृष्ट्वा हृष्टो वीक्ष्य पृथुस्तनीम् ॥ ३६ ॥

वाक्यार्थरहितं यत्तदपार्थमिह तद्यथा ॥

दाराः के मेरुरुत्तुंगो नद्यः शुकास्तु के गजाः ॥ ३७ ॥

अत्र कोऽपि समुदायार्थो न पुष्टः ॥

प्रयोजनोज्झितं प्रोक्तं यत्तद्व्यर्थमिदं यथा ॥

शौर्याब्धिस्ते महान् वंग किमु चक्री न सेव्यते ॥ ३८ ॥

भो वंगदेशाधिप शौर्याब्धिस्ते महानिति स्तुतिश्चक्री सेव्यतामित्युपदेशे न युज्यते ॥

सम्बन्धेनोज्झितं यत्तद्भिन्नमित्युच्यते यथा ॥

सत्यं नाराधितो धर्मो यदब्धिर्मणिभिश्चितः ॥ ३९ ॥

धर्माराधनाभावस्याब्धे रत्नपूर्णस्य च न सम्बन्धः ॥

पूर्वापरत्वहानिः स्याद्यत्रापक्रममिष्यते ॥

जगदाह्लादनं कृत्वा पश्चादत्रोदितो विधुः ॥ ४० ॥

अत्र उदयोत्तरकालभाविन आह्लादस्य पूर्वकालत्ववचनात् ॥

अत्यन्तक्रौर्ययुक्तं यत्परुषं कथितं यथा ॥

इमेऽपूपार्थिनो बाला क्षिप्यन्तां दाववन्हिषु ॥ ४१ ॥

अलङ्कारोज्झितं यत्तन्निरलङ्कारकं यथा ॥

दीर्घेणोत्थाप्यमानेन मेहनेन तुरङ्गमः ॥

पृथ्वग्रग्रन्थिनाऽऽरुह्य वडवां क्लेशयत्यरम् ॥ ४२ ॥

स्वभावोक्तिरपि न श्लाघ्यविशेषणाभावात् ॥

अप्रतीतोपमानं स्यादप्रसिध्दोपमं यथा ॥

मुखानि भान्ति चारूणि कैरवाणीव योषिताम् ॥ ४३ ॥

मुखानां कैरवाण्युपमानत्वेन कविजनेषु न प्रसिद्धानि ॥

यत्रार्थकथनं हेतुरहितं हेतुशून्यकम् ॥

वने च्यूतादिरम्येऽत्र विहर्तुं न क्षमा वयम् ॥ ४४ ॥

कुत इत्युक्ते हेतुर्नोक्तः ॥

रसस्याप्रस्तुतस्योक्तिर्यत्र तद्विरसं यथा ॥

गच्छत्सशोककामिन्यश्चुम्बिताः शबरैर्वने ॥ ४५ ॥

चक्रिरिपुकान्ताः स्वपतिवियोगशोकिन्यः चुम्बिता इति विरसत्वम् ॥

श‍ृङ्गारादिरसत्यागी चैतद्वाविरसं यथा ॥
गौरेकवालधिः सांघ्रिचतुष्को द्विखुरो व्यभात् ॥ ४६ ॥
भवेत्सहचरभ्रष्टं तुल्यवस्त्वप्रबन्धतः ॥
रतं स्मरेण सद्बोधः शास्त्रेण वनिता ह्रिया ॥ ४७ ॥
सद्बोधेन वनितारतयोरप्रकर्षात्ताभ्यां वा तस्याप्रकर्षात् ॥
यत्र वाक्यार्थसन्देहः ससंशयमिदं यथा ॥
उत्पलानि सरोजानि स्त्रीवक्त्राणि हसन्त्वरम् ॥ ४८ ॥
अत्र केषां कर्मत्वं केषां कर्तृत्वमिति संशयात् ॥
ह्रीकरो मुख्यतोऽन्योऽर्थो यत्राश्लिलमिदं यथा ॥
स्तब्धः पतति रन्ध्रैषी यः स नोन्नतिमान् पुनः ॥ ४९ ॥
ध्वनिना मेहनप्रतीतेः ॥
सर्वलोकव्यपेतं यदतिमात्रमिदं यथा ॥
वैरिस्त्रीनयनाम्भोभिरसङ्ख्याः सागराः कृताः ॥ २५० ॥
यत्रातुल्योपमानं तदसदृक्षोपमं यथा ॥
वडवानलदग्धोऽब्धिः शारदेन्दुरिव व्यभात् ॥ ५१ ॥
हीनाधिकोपमाने ते हिनाधिक्योपमे यथा ॥
विद्याशुनीव ते भाति बको मुनिरिव व्यभात् ॥ ५२ ॥
विरुध्येत दिगाद्येन विरुद्धं बहुधा यथा ॥
उत्तरस्यां दिशि प्राज्यप्रभयोदेति भानुमान् ॥ ५३ ॥
अत्र दिग्विरोधः ॥
मरुदेशे सरस्तृष्णाहरं भाति सुशीतलम् ॥
महीशानां विषाणेभ्यो मौक्तिकान्युद्भवत्यरम् ॥ ५४ ॥
देशविरोधस्तदनु लोकविरोधः ॥
धर्मःपुरुषवर्तित्वात्पापहेतुरधर्मवत् ॥
वन्ध्या मे जननी भाति शीतलो वन्हिराबभौ ॥ ५५ ॥
आगमस्ववचनप्रत्यक्षाविरोधाः ॥

चुम्बनालिङ्गनाद्येन नीवीविस्रंसनेन च ॥
अन्तस्तुष्टां वधूं रम्यां शिशुराक्रीडति स्फुटम् ॥ ५६ ॥

अवस्थाविरोधः ॥

दोषस्तु रसभावानां स्वस्वशब्दग्रहाद्यथा ॥
शृङ्गारमधुरां तन्वीमालिलिङ्ग घनस्तनीम् ॥ ५७ ॥

स्वशब्दग्रहणमत्र शृङ्गाररसे दुष्यति ॥

सलज्जा पतिवक्त्राब्जे सेर्ष्या वक्षोरमाश्रियाम् ॥
सविस्मयेंद्रनाथ्येऽभून्मरुदेवी मनोहरा ॥ ५८ ॥

अत्र सञ्चारिभावे लज्जापदग्रहणं दुष्यति ॥

श्रूयमाणैर्झणत्कारैरायुधानां परस्परम् ॥
हत्याजाते रणे तस्याऽभूदुत्साहोऽन्यदुर्लभः ॥ ५९ ॥

अत्र स्थायिभावस्योत्साहस्य स्वशब्दग्रहणेन दोषः ॥

रतिं जहाति बुद्धिं स्वां लुनीते स्खलति स्फुटम् ॥
करोति परिवृत्तिं च सेत्याऽऽलीनामभूद्वचः ॥ २६० ॥

अत्र रत्यादित्यागस्य करुणेऽपि सम्भवाद्विप्रलम्भे रत्यादित्यागानुभावस्य कष्टकल्पना ॥

आगः सहस्व पश्यास्यं प्रसीद प्रियमालप ॥
मुग्धे गलति कालोऽत्र घटीयन्त्रजलं यथा ॥ ६१ ॥

कालस्यानित्यत्वं शान्तरसेऽनुभावः स च शृङ्गारे प्रोक्त इति प्रतिकूलग्रहणम् ॥ इत्यादयो रसभावगता दोषा बोध्याः ॥ लज्जारत्युत्साहादिशब्दग्रहणं कश्चिदिष्यते तथा बहुधाप्रयोगात् ॥

क्वचित्क्वाचिच्च चित्रादौ दोषा एव गुणा यथा ॥
शास्त्रमध्येष्ट षड्वर्गं व्यजेष्टायष्ट सज्जिनम् ॥ ६२ ॥

क्रियापदोदाहरणकाव्यमेकं कृतं चेत्परुषमपि न दुष्यति ॥

यमकश्लेषचित्रादौ द्व्यक्षरादिनिबन्धने ॥
क्लिष्टासमर्थनेयार्थपदादि न च दुष्यति ॥ ६३ ॥

सुबिम्बाधरेऽस्या नितम्बाम्बरेण गिरिस्था लता वा नितम्बाम्बरेण ॥ अत्र यौगिकात् प्रत्युक्तस्याम्बरशब्दस्य मेघार्थे असमर्थत्वेऽपि न दोषः ॥ राजीवराजीव तनौ सुराणां नेत्राऽलिनेत्रालिरवादि तत्त्वम् ॥ अत्र वाक्यसङ्कीर्णत्वेऽपि न दोषः ॥ एवं पूर्वोक्तशब्दालङ्कारप्रकरणे दोषाणामपि गुणत्वं द्रष्टव्यम् ॥

एकादश्यां करजलिखितग्रीवमालिंग्य गाढं ।
पायंपायं दशनवसनं किञ्चिदालीढलोलाः ॥
घातंघातं हृदि सहसितं मन्मथागारमुद्रा- ।
भङ्गक्रीडातरलितकराः कामिनीं द्रावयन्ति ॥ ६४ ॥

व्रीडाकराश्लीलमपि कामशास्त्रे न दुष्यति ॥

वर्चोगृहं विषयिणां मदनायुधस्य । नाडीव्रणं विषमनिर्वृतिपर्वतस्य ॥
प्रच्छन्नपातुकमनङ्गमहाहिरन्ध्र- । माहुर्बुधा जघनरन्ध्रमदः सुदत्त्याः ६५

जुगप्साश्लीलमपि वैराग्यप्रस्तावे न दूषणम् ॥

धन्विनः स्थानमन्यस्य सामान्यस्येदृशं कुतः ॥
अहो दृष्टि रहो मुष्टिरहो सौष्टवमित्यपि ॥ ६६ ॥

अर्जुनेन चापज्यासन्धाने कृते नृपस्तवे अहोपदानां बहुधा विस्मये प्रयोगे न दोषः ॥

मुक्ताहार इति प्रोक्ते शेषरत्ननिवर्तनम् ॥
कार्मुकज्यापदेनापि चापारोपणनिश्चयः ॥ ६७ ॥
कलभे करिशब्देन तज्जन्यत्वं निवेद्यते ॥
इत्यादियुक्तशब्दानां गणस्यार्थोऽपि बुध्यतां ॥ ६८ ॥

इति दोषप्रकरणम् ॥

श्लेषो भाविकसम्मितत्त्वसमतागाम्भीर्यैरित्युक्तयो ।
माधुर्यं सुकुमारता गतिसमाधी कान्तिरौर्जित्यकम् ॥
अर्थव्यक्तिरुदारता प्रसदनं सौक्ष्म्यौजसी विस्तरः ।
सूक्तिः प्रौढिरुदात्तता पुनरपि प्रेयान्ससंक्षेपकः ॥ ६९ ॥

अनेकेषां पदानां तु यत्रैकपदवत्स्फुटम् ॥
भासमानत्वमाख्यातः श्लेषाख्यः कविनागुणः ॥ २७० ॥
अशरणमशुभमनित्यं दुःखमनात्मानमावसामि भवम् ॥
मोक्षस्तद्विपरीतात्मेति ध्यायन्तु सामयिके ॥ ७१ ॥

अत्र पठणसमये बहूनां पदानामेकपदवदवभासनं न तु पदच्छेदकरण-कालादौ ॥

भावतो वर्तते वाक्यं यत्र तद्भाविकं यथा ॥
तावदर्थपदत्वं यत् सम्मितत्वगुणो यथा ॥ ७२ ॥

श्लेषादिगुणानां मध्ये केषांचिद्दोषपरिहारद्वारेण गुणत्वम् ॥ केषाञ्चित्तु स्वत एवोत्कर्षबीजत्वेन गुणत्वम् ॥ तत्र ये स्वत एव चारुत्वातिशयहेतवः सन्ति ते गुणाः ॥ को गुणः कस्य दोषस्य परिहाराय प्रभवतीत्युक्ते तत्र तत्र गुणलक्षणप्रतिपादनप्रस्तावे निगद्यते ॥ यावत्प्रयोजनमस्ति तावत्प्रयो-जनपदवत्त्वं सम्मितत्वं न्यूनाधिकपदपरिहाराय तत् ॥

तात नाथ रथांगेश विनीतानगरीपते ॥
लवणाम्बुधिमेतं त्वं पश्य पश्य महामते ॥ ७३ ॥

अत्र प्रीतिस्वरूपभाववशात्तात नाथेति वाक्यवृत्तिः ॥

यावन्ति जिनचैत्यानि विद्यन्ते भुवनत्रये ॥
तावन्ति सततं भक्त्या त्रिःपरीत्य नमाम्यहम् ॥ ७४ ॥
रचनाया अवैषम्यभणनं समता यथा ॥
प्रक्रान्तिदोषभङ्गस्य परिहाराय सा मता ॥ ७५ ॥
अवनितलगतानां कृत्रिमाकृत्रिमाणां ।
वनभवनगतानां दिव्यवैमानिकानाम् ॥
इह मनुजकृतानां देवराजार्चितानां ।
जिनवरनिलयानां भावतोऽहं स्मरामि ॥ ७६ ॥

अत्र पादचतुष्केऽपि तुल्यवत्कथनात्समत्वम् ॥

गाम्भीर्यं ध्वनिमत्त्वं तु रीतिः प्रारब्धपूरणम् ॥

पतत्प्रकर्षदोषस्य हानये रीतिरुच्यते ॥ ७७ ॥
चन्द्रस्य निष्कलस्याब्धेर्गाढस्य कुलभूभृताम् ॥
नीचैः किं करणेनेति सृष्टश्चक्री विरिञ्चिना ॥ ७८ ॥
मुख्याद्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ॥
समस्तदुःपटच्छन्नजगदुद्योतहेतवे ॥
जिनेन्द्रांशुमते तन्वत्प्रभाभाभारभासिने ॥ ७९ ॥
भणितिर्या विदग्धानामसावुक्तिरितीष्यते ॥
अश्लीलपरिहाराय स्वीक्रियेतात्र साऽपि च ॥ २८० ॥
राज्ञस्ते कमलासक्तिश्चित्रवृत्तेः समीक्षिता ॥
मा स्वकाऽपि त्वया चारुकुमुदाभासनं कृतम् ॥ ८१ ॥
पाठकालेऽपि वाक्येऽपि भिन्नभिन्नपदत्वतः ॥
यत्प्रतीयेत तत्प्रोक्तं माधुर्यं विदुषा यथा ॥ ८२ ॥
दानं ज्ञानधनाय दत्तमसकृत्पात्राय सद्वृत्तये ।
चीर्णान्युग्रतपांसि तेन सुचिरं पूजाश्च बह्व्यः कृताः ॥
शीलानां निचयः सहामलगुणैः सर्वः समासादितो ॥
दृष्टस्त्वं जिन येन दृष्टिसुभग श्रद्धापरेण क्षणम् ॥ ८३ ॥
वर्णकोमलता सानुस्वारत्वं सुकुमारता ॥
हान्यै श्रुतिकटुत्त्वस्य दोषस्य कथिता च सा ॥ ८४ ॥
चन्द्रप्रभं चन्द्रमरीचिगौरं । चन्द्रं द्वितीयं जगतीव कान्तम् ॥
वन्देऽभिवन्द्यं महतामृषीन्द्रं । जिनं जितस्वान्तकषायबन्धनम् ८५
स्वरारोहावरोहौ द्वौ रम्यौ यत्र गतिर्यथा ॥
आरोप्यतेऽन्यधर्मोऽन्यत्र समाधिर्यथा पुनः ॥ ८६ ॥
सारा वाणी पुरुजिनपतेर्नाकिनाथाभिपूज्या ।
हीना दोषैरुरुनययुता मोक्षमार्गावभासा ॥
चञ्चच्छर्मप्रकटनमयप्रस्फुरच्चुद्रमुक्तिं ।
तत्त्वज्ञप्तिं नयतु सकलं भव्यवृन्दं विगर्वम् ॥ ८७ ॥

पूर्वार्द्धे दीर्घाक्षरप्रचुरत्वात् स्वरस्यारोहः अपरार्धे ह्रस्वाक्षरत्वेन स्वरस्यावरोहः ॥

कीर्तिः पल्लविता लोके सुतस्य वृषभेशिनः ॥
मानो म्लानो द्विषां लोके तदाज्ञाया विरोधिनाम् ॥ ८८ ॥
रचनात्युज्वलत्वं यत्काव्ये सा कान्तिरिष्यते ॥
ग्राम्यदोषनिरासाय स्वीकृता सा पुनर्यथा ॥ ८९ ॥

जयति भगवान्हेमाम्भोजप्रचारविजृम्भिता- ।
वमरमुकुटच्छायोद्गीर्णप्रभापरिचुम्बितौ ॥
कलुषहृदया मानोद्भ्रान्ताः परस्परवैरिणो ।
विगतकलुषाः पादौ यस्य प्रपद्य विशश्वसुः ॥ २९० ॥

दृढबन्धत्वमौर्जित्यं विसन्धिविनिवृत्तये ॥

वन्दारुवृन्दपरिघट्टविलोलिताक्ष- ।
वृन्दारकेश्वरकिरीटतटावकीर्णैः ॥
मन्दारपुष्पनिवहैर्विहितोपहारं ।
वन्दामहे जिनपतेः पदपद्मयुग्मम ॥ ९१ ॥

वाक्यान्तरानपेक्षत्वायत्र सम्पूर्णवाक्यता ॥
अर्थव्यक्तिगुणः सोऽयं सोऽपुष्टार्थनिवृत्तये ॥ ९२ ॥

जयति जगदीशमस्तकमणिकिरणकलापकल्पितार्घविधि ॥
जिनचरणकमलयुगलं गणधरगणनीयनखरकेसरकम ॥ ९३ ॥

विकटाक्षरबन्धत्वं यत्रौदार्यं मतं यथा ॥

दोषान्काँश्चन तान्प्रवर्तकतया प्रच्छाद्य गच्छत्ययं ।
सार्द्धं तैस्सहसा मृते यदि गुरुः पश्चात्करोत्येष किम् ॥
तस्मान्मे न गुरुर्गुरुर्गुरुतरान्कृत्वा लघूँश्च स्फुटं ।
ब्रूते यस्सततं समीक्ष्य निपुणं सोऽयं खलः सद्गुरुः ॥ ९४ ॥

पदानामर्थचारुत्वप्रत्यायकपदान्तरैः ॥
मिलितानां यदादानं तदौदार्यं स्मृतं यथा ॥ ९५ ॥

इति वाग्भटोक्तिरपीष्टा ॥

श्रीलीलायतनं महीकुलगृहं कीर्तिप्रमोदास्पदं ॥
वाग्देवीरतिकेतनं जयरमाक्रीडानिधानं महत् ॥
स स्यात्सर्वमहोत्सवैकभवनं यः प्रार्थितार्थप्रदं ।
प्रातः पश्यति कल्पपादपदलच्छायं जिनांघ्रिद्वयम् ॥ ९६ ॥

श्रियो लक्ष्म्या विलासगृहं स प्रातः जिनपदयुगं दृष्ट्वा स्याद्भवेत् भवितुमर्ह-तीत्यर्थः ॥ स्यादित्यत्र तृध्यप् चार्हे इत्यनेन लेङ् ॥

शब्दार्थयोः प्रसिद्धत्वं झटित्यर्थार्पणक्षमम् ॥
प्रसादः क्लिष्टदोषस्य परिहाराय स स्मृतः ॥ ९७ ॥
यस्य विज्ञानकोणस्थौ लोकालोकावणूपमौ ॥
तस्मै वीरजिनेन्द्राय नमस्तत्पदलब्धये ॥ ९८ ॥
शब्दानां गूढसञ्जल्परूपता सौक्ष्म्यमिष्यते ॥
समासबहुलत्वं स्यादोजोगुण इह स्फुटः ॥ ९९ ॥
णूश्रीञ्पूजनमः कर्मण्यत्र वृत्ता न कर्तरि ॥
जिने णिज्ञाभिदः कर्तर्येव कर्मणि नो मताः ॥ २०० ॥

जिनो नूयते श्रीयते पूज्यते नम्यते स्तवनीयः आश्रयणीयः पूजनीयो नमनीय एव न तु स पुनरन्यं नुवति श्रयति पूजयति नमतीति । नयति तत्त्वमुपदिशति जानाति भिनत्ति कर्माद्रिमिति गूढमन्तःसञ्जल्पनस्वरूप-त्वेन सौक्ष्म्यम् ॥

जयति जगदीशमस्तकमणिकिरणकलापकल्पितार्घविधि ॥
जिनचरणकमलयुगलं गणधरगणनीयनखरकेसरकम् ॥ १ ॥
समर्थनार्थमुक्तार्थप्रपञ्चोक्तिस्तु विस्तरः ॥
अभिषेक्तुं पुरुं द्रष्टुमिन्द्र एकः क्षमो जिनम् ॥
यद्बाहवः सहस्रं यन्नेत्राण्यपि महोत्सवे ॥ २ ॥
तिङां सुपां परिज्ञानं सौशब्द्यं कथितं यथा ॥
च्युतसंस्कारहान्यर्थं तदिह स्वीकृतं पुनः ॥ ३ ॥

कवीनां गमकानां च वादिनां वाग्मिनामपि ॥
यशः सामन्तभद्रीयं मूर्ध्नि चूडामणीयते ॥ ४ ॥
कविर्नूतनसन्दर्भो गमकः कृतिभेदकः ॥
वादी विजयवाग्वृत्तिर्वाग्मी तु जनरञ्जनः ॥ ५ ॥
उक्तेर्यः परिपाकः सा प्रौढिरित्युच्यते यथा ॥
कल्पद्रोर्विभवो विधेः कुशलता भानोः सुतेजोगणो ।
हेमाद्रेः प्रतिबिम्बनं गुणगणः स्वायम्भुवोक्तेः स्फुटः ॥
गाम्भीर्यं जलधेर्विधोर्विलसनं चिन्तामणेर्दित्सनं ।
जैनश्रीकरुणागणः शमरसश्चेत्येष तर्क्यो निधीट् ॥ ६ ॥
पदानि यत्र युज्यन्ते श्लाघ्यमानविशेषणैः ॥
उदात्तता मता सा चानुचितार्थत्वहानये ॥ ७ ॥
पठद्बन्दिकुलाकीर्णं चलच्चामरसञ्चयम् ॥
विनमद्भूपसंघट्टं निधीशास्थानमाबभौ ॥ ८ ॥
उदात्तत्वमौदार्येऽन्तर्भवति वाग्भटाद्यपेक्षया ॥
चाटूक्तेः प्रियतरः प्रोक्तः प्रेयानित्युच्यते यथा ॥
पारुष्यस्य च दोषस्य परिहाराय स स्मृतः ॥ ९ ॥
कारुण्यं त्वयि धीरता त्वयि शमस्त्वय्युत्तमत्वं त्वयि ।
प्रागल्भ्यं त्वयि चार्यता त्वयि महैश्वर्यं त्वयि प्राभवम् ॥
गाम्भीर्यं त्वयि सत्कला त्वयि यशस्त्वय्युत्तमत्वं त्वयि ।
क्षेमं श्रीस्त्वयि चक्रभृत् भुवमिमां रारक्ष्यातां ब्रह्मवत् ॥ ३१० ॥
संक्षिप्यार्थो निरूप्येत यत्र संक्षेप उच्यते ॥
कुरुवंशोद्भवाज्जाता बहवो भूमिपाः पुरा ॥
तेषां सौभाग्यसन्दर्शी ज्ञानचन्द्रो विभात्ययम् ॥ ११ ॥
इति गुणप्रकरणम् ॥
माधुर्यं शौचशौर्ये स्मृतिधृतिविनया वाग्मितोत्साहमाना- ।
स्तेजोधर्मौ दृढत्वं प्रियवचनमपि प्राज्ञता दक्षता च ॥

त्यागो लोकानुरागो मतिरुरुकुलता सत्कलावेदिता च ।
स्थैर्यं शास्त्रार्थसूक्तिर्वय इति च गुणा नेतृसाधारणास्ते ॥ १२ ॥
नायकस्तद्गुणोपेतः स चतुर्धा प्रभाष्यते ॥
उदात्तललितौ शान्तोद्धतौ धीरोक्तिपूर्वकाः ॥ १३ ॥
दयालुरनहङ्कारः क्षमावानविकत्थनः ॥
महासत्त्वोऽतिगम्भीरो धीरोदात्तः स्मृतो यथा ॥ १४ ॥
तान्म्लेच्छान्विहितागसः ... नमय प्राणैः सह श्रीजये- ।
त्यात्तश्रीकरुणः सुरेशहरिदाद्यधिस्थदेवाननिः ॥
ध्यायन्नप्यनहंकृतिः सकलदिग्भूमीशपूज्यांघ्रिकः ।
श्रीपंचास्यपराक्रमो न विकृतिं सर्वत्र सोऽगान्निधीट् ॥ १५ ॥
कलासक्तः सुखी मन्त्रिसमर्पितनिजक्रियः ॥
भोगी मृदुरचिन्तो यः स धीरललितो यथा ॥ १६ ॥
गवाक्षसंलम्बितपादयुग्म- । प्रवेदितात्मस्थितिरुद्धहर्म्ये ॥
चिक्रीड राजा परिरम्भचारु- । कटाक्षगीतादिभिरङ्गनाभिः ॥ १७
कलामार्दवसौभाग्यविलासी च शुचिः सुखी ॥
रसिकः सुप्रसन्नो यो धीरशान्तो मतो यथा ॥ १८ ॥
कान्तास्यपद्मनयनद्युतिनालजाल- ।
सम्पीयमानतनुगं पुरि पर्यटन्तम् ॥
सौधस्थिताऽपि वनिता नवकामदेवं ।
बाहू प्रसारयति तं परिरब्धुकामा ॥ १९ ॥
चपलो वञ्चको दृप्तश्चण्डो मात्सर्यमण्डितः ॥
विकत्थनो ह्यसौ नेता मतो धीरोद्धतो यथा ॥ २० ॥
अप्रेक्ष्योऽजनि राहुरप्यपि विधुः कार्श्येतरद्वन्द्वगः ।
सूर्यः शून्यपदं गतश्च रिपवः संशेरते गह्वरे ॥
गर्भस्थोऽतिसुकम्पते शिशुररं यस्यास्य मे गर्जना- ।
त्कीटा धावत मा म्रियध्वमिति तच्चक्रेद्भटो युद्धवान् ॥ २१ ॥

सर्वेष्वपि रसेषूक्ता नायकास्ते चतुर्विधाः ॥
प्रत्येकं तेषु शृङ्गारे चत्वारो भाषिता बुधैः ॥ २२ ॥
दक्षिणः शठधृष्टावनुकूलश्चेति भाषिताः ॥
दक्षिणो बहुसाम्यः स्याद्गूढविप्रीतिकृच्छठः ॥
व्यक्तागा गतभीर्धृष्टस्त्वेकाधीनोऽनुकूलकः ॥ २३ ॥

बह्वीषु नायिकासु अवैषम्येण स्नेहानुवर्ती दक्षिणः । नायिकामात्रज्ञाताऽप्रीतिकारी शठः । नखक्षतादिना व्यक्तापराधो धृष्टः ॥ नायिकायां एकस्यां विशेषानुरक्तोऽनुकूलः ॥

मत्क्रीडागृहवक्षसीतरवधूः स्वप्नेऽपि मास्तामिति ।
श्रीकान्ता सकलार्थसाधनपटौ बाहौ च वीरेन्दिरा ॥
ब्राह्मी चोद्घमुखे कृतादरतया जागर्ति सा देव्यपि ।
तत्रैवेच्छुरिति प्रबुध्य निधिपोऽस्थाद्द्वित्रिनाडीर्विधिः ॥ २४ ॥
काञ्चीनूपुरकिङ्किणीमणिरवं श्रुत्वाऽन्यकान्तागतं ।
गाढाश्लेषमहाश्लथीकृतभुजग्रन्थिः शठाद्यासि भोः ॥
साक्षात्तन्मनसो गतं मम सखी ह्यज्ञातवत्त्यागता ।
त्वन्माधुर्यवचोभ्रमा मम पुरस्तां श्लाघते सादरात् ॥ २५ ॥
तस्याश्चारुरते रदक्षतमहामुद्राङ्कितं स्वाधरं ।
धूर्त च्छादयसे किमंघ्रिनमनव्याजेन मे रुट्श्रितः ॥
इत्युक्तेन मया क्वचास्ति तदिति व्यामार्ष्टुमिच्छावता ।
गाढाश्लिष्टतनुः सुविस्मृतवती तच्छर्मरोमाञ्चिता ॥ २६ ॥
सुखं त्वमसि चेदस्ति विश्वेन्द्रियसमुद्भवम् ॥
अन्याङ्गनाकटाक्षादीननिच्छोमम सुप्रिये ॥ २७ ॥
धीरोदात्तादिनेतृणामिति भेदास्तु षोडश ॥
परमध्यावरत्वेन त्रित्वमेष्वेव बोधितम् ॥ २८ ॥
नायका भेदतस्त्वष्टचत्वारिंशदितीरिताः ॥
विदूषको विटः पीठमर्दो नेतृसहायकाः ॥ २९ ॥

नेतुर्विदूषको हासकारी चारुप्रसङ्गतः ॥
नायकस्वान्तरागानुकूलविद्यो विटो मतः ॥ ३३० ॥
मनागूनगुणो नेतुः कार्ये दक्षोऽन्तिमो मतः ॥
लुब्धधीरोद्धतस्तब्धाः पापिष्ठाः प्रतिनायकाः ॥ ३१ ॥
सत्वजा यौवने पुंसां शोभाद्या ह्यष्टधा गुणाः ॥
गाम्भीर्यं स्थैर्यमाधुर्ये तेजः शोभाविलासनम् ॥ ३२ ॥
औदार्यं ललितं चेति तेषां लक्षणमुच्यते ॥
गाम्भीर्यं या प्रभावेनाऽविकृतिः क्षोभणेऽपि च ॥
कार्यादचलनं स्थैर्यं विघ्ने महति सत्यपि ॥ ३३ ॥
माधुर्यं तर्कणं सूक्ष्मकलासञ्चयगोचरम् ॥
प्राणनाशेऽपि धिक्काराक्षमत्वं तेज उच्यते ॥ ३४ ॥
शोभायां शौर्यदक्षत्वे स्पर्धा नीचैर्घृणाऽधिकैः ॥
विलासो सस्मितोक्तिस्सधैर्या गतिः प्रसन्नदृक् ॥ ३५ ॥
औदार्यं स्वपरेषु स्याद्दानाभ्युपगमाधिकम् ॥
ललितं मृदु शृङ्गाराकृतौ सहजचेष्टनम् ॥ ३६ ॥
स्वीयेतरा च सामान्या नायिका तद्गुणा त्रिधा ॥
सशीला सत्रपा स्वीया प्रगुणा च सती यथा ॥ ३७ ॥

व्रीडानतास्यामृजुचित्तवार्णी । स्वशीलमालायितहारयष्टिम् ॥
बभार वक्षस्युरुपट्टदेवीं । लक्ष्मीमिव प्रेमकरीं निधीशः ॥ ३८ ॥

अन्योढा कन्यका चेति सान्या तु द्विविधा मता ॥
सशृंगाररसाऽन्योढा कन्यका नीरसा यथा ॥ ३९ ॥
इति स्वेष्टार्थसंवादे वनमाला स्मरातुरा ॥
दूत्या पत्यौ परोक्षे द्रागविक्षद्राजमन्दिरम् ॥ ३४० ॥

स्वांके समारोप्य धवेन केन । कुमारि भाव्यं वद चेति सूक्ते ॥
अधोमुखीभूय पितुः पुरस्ता-। ल्लिलेख पादांगुलिभिर्भुवं सा ॥४१॥

सीत्काराश्लेषधार्ष्ट्याद्यैरनुरक्तेव रञ्जयेत् ॥

दातारं नायकं वेश्या सा तु साधारणा यथा ॥ ४२ ॥
पद्मरागमणिजातरक्तिमा । स्फाटिकीव दृषदायताम्बका ॥
जायते च गणिका यदा युता । येन रागसहिता तदैव च ॥४३॥
मुग्धा मध्या प्रगल्भेति स्वीया सा त्रिविधा मता ॥
रते वामाऽल्पक्रुन्मुग्धा नवयौवनमन्मथा ॥ ४४ ॥
नवांकुरोद्भिन्नकुचां लतांगीं । मुखाब्जलोलालकचञ्चरीकाम् ॥
रतोररीकारमतिच्युतां तां । बहिः परं तुष्टिमिनोऽनुगुह्य ॥ ४५ ॥
मध्या गूढवयःकामा मोहितान्त्यरते यथा ॥
केशान्गृह्णति चुम्बति प्रतिलिखत्यास्फालयत्यादरा- ।
द्दक्षो भ्रूललाटे करं रदनखं व्यापारयत्यात्मनः ॥
तन्वाने रतचाटुकोटिमतुले श्रीनायके भोः सखि ।
शापाँस्तत्र शतं व्यधामपि मया ज्ञानं न किञ्चित्तदा ॥ ४६ ॥
अत्यन्तमुक्वयःकामा लीनेव प्रियवक्षसि ॥
प्रगल्भा सुरतारम्भेऽप्यस्वाधीनमना यथा ॥ ४७ ॥
गाढाश्लेषप्रलीनस्तनबिसजयुगोद्भिन्नरागोद्गमाढ्या ।
सान्द्रस्नेहातिरेकप्रगलितविरणत्काञ्चिसुश्रोणिवस्त्रा ॥
मा माऽलं मेति दैन्यप्रलपितवदना किं मृता किं सुषुप्ता ।
काये किं सुप्रविष्टा मनसि समुषिता वेति सा रंरमीति ॥ ४८ ॥
मध्या त्रेधा मता धीरा धीराधीरा तथेतरा ॥
सागसं भेदयेद्धीरा सोत्प्रासानृजुवाग्यथा ॥ ४९ ॥
केतक्यानवकण्टकैर्गलमुखं व्यापाटितं हन्त हा ॥
प्रस्वेदक्लदमातपेन लपनं वातेन कीर्णाः कचाः ॥
यातायातपरिश्रमाद्वपुरिदं क्लान्तं तवैवं त्वपि ।
तावत्तिष्ठ च तिष्ठ मा विश गृहं धूल्याप्ररक्ताम्बका ॥ ५० ॥
धीराधीरा मता साश्रुवक्त्रसोत्प्रासवाग्यथा ॥
दयिते किं नाथ कान्ते जहिहि मयि रुषं रोषतः किं कृतं ते ।

मनश्चेतो दन्दहीमि प्रियवठर कृतं किं त्वयाऽऽगो मयैव ॥
यदि चैवंरोदिषि त्वं किमिति रुदितहृत्त्वं नु को मे प्रियोऽहं
नहि दग्धा मे मनस्त्वं रुदितमकृत सा त्वं चमूरीशितेति ।

गलदश्रुप्रवाहेण कठोरवचसा क्रुधा ॥
खेदयेत्सापराधं या स्यादधीरा च सा यथा ॥ ५२ ॥

दन्तोत्पीडगताधरामृतरसं स्वेदच्युतास्यद्युतिं ।
गाढाश्लिष्टभुजोरुपाशयुगलव्याबन्धनाशक्तिकम् ॥
नेत्रैरीक्षितुमक्षमा वयममुं त्वं मुञ्च मुञ्चालि भोः ।
किं तेनाद्रियतां च मा खलवरो यायातु यायातु सः ॥ ५३ ॥

प्रगल्भाऽपि त्रिधा मध्यावदेव परिभाषिता ॥
व्याजेनाद्या रतं त्यक्त्वा सागसं खेदयेद्यथा ॥ ५४ ॥

कान्ताभ्यर्णस्थिता सा करधृतसुमनःकन्दुकानीतिदम्भा- ।
दाश्लेषं विघ्नयन्ती गलरवलपितादीनि चालीजनेभ्यः ॥
ताम्बूलं तालवृन्तं मुकुरमपि ममाशाऽऽनयन्त्वित्युपात्तं ।
नीतेभ्यः कोपजालं सफलमकृत तं चातुरी खेदयन्ती ॥ ५५ ॥
दृष्ट्वा तं खण्डितोष्ठं कलहयति पुरेवाशु केशग्रहं नो ।
दत्ते गण्डं सदोष्ठं वितरति न च सञ्चुम्बितुं मुग्धमुग्धः ॥
नीवीविस्रंसने वा वितरति न तनुं श्लिष्यतोऽप्यग्रहृष्टा ।
शिक्षां तन्वी स्वनेतुः कुरुत इति महाकोप एषोऽत्र नान्यः ॥५६॥

धराधीरा प्रगल्भादिः सोत्प्रासाऽनृजुवाग्यथा—
अन्योन्यस्मेरता च भृकुटिविरचना दृष्टिपातः प्रसादो ।
गाढाश्लेषोऽपि मौनं भणितमनुनयो यत्र रोमाञ्चवृद्धिः ॥
स्नेहोद्रेकोऽपि कोपो भवति ननु सदा तस्य वैरस्यमासी- ।
त्प्रेम्णः पश्याद्य पादान्तग लुठसि तथाप्यस्ति मन्युः खलायाः ॥

अधीरा तु प्रगल्भादिस्तर्जयेत्ताडयेद्यथा ॥
कोपादायान्तमुष्णश्वसितदयितया बाहुपाशेन बध्वा ।

वासागारं च नीत्वा परिजनपुरतः सूचयन्त्याऽपराधम् ॥
नातो भूयो दुरात्मन्निति मधुरगिरा संरुदत्या पदाभ्यां ।
मञ्जीरासिञ्जिताभ्यां हसति मुदमितस्ताडितो निह्नुतीद्धः ॥ ५८ ॥

मध्या तथा प्रगल्भा च भिदा ज्येष्ठाकनिष्ठयोः ॥
प्रत्येकं षड्विधा प्रोक्ता कामितोषकरी यथा ॥ ५९ ॥

कान्ते एकत्र सुस्थे त्वविदितचरमात्प्रेमतोऽभ्येत्य दृष्ट्वै- ।
कस्या नेत्रेऽपिधायापिहितवरमहाकेलिदम्भेन चान्याम् ॥
ईषद्ग्रीवाप्रभङ्गः पुलकितमुतनू रोमहृष्टिं दधाना- ।
मन्तर्हासोरुगण्डां तरलतरदृशं चुम्बति द्राक्च धूर्तः ॥ ६० ॥

अष्टावासामवस्थाः स्युः स्वाधीनपतिकादयः ॥
स्वाधीनपतिका वासकसज्जिका कलहान्तरा ॥ ६१ ॥
खण्डिता विप्रलब्धा तु तथा प्रोषितभर्तृका ॥
विरहोत्कण्ठिता चान्या तथान्या चाभिसारिका ॥ ६२ ॥
स्वाधीनपतिकाऽऽसन्नाऽऽयत्तनाथा मता यथा ॥
याऽलंकृता प्रियागत्या यथा वासकसज्जिका ॥ ६३ ॥

उरोजयोरेणमदेन तस्याः । कुतूहली यं मकरं लिलेख ॥
विभावयामास स भावयोनेः । स्थूलाग्रजाग्रन्मकरध्वजस्य ॥६४॥

काञ्चीमनूपुरविसिञ्जितचित्तरम्या ।
गुञ्जद्द्विरेफसुखनीरजशोभमाना ॥
भास्वत्युदेष्यति मृणालनिभोरुहारा ।
कान्ते समेष्यति बभौ नलिनीव तन्वी ॥ ६५ ॥

पश्चात्तापार्ता निरस्येशं कलहान्तरिता यथा ॥
विबुद्धांगजचिह्नेशे खण्डितेर्ष्यावती यथा ॥ ६६ ॥
अनुनेतुमनाः कान्तः परुषोक्त्या हतो गतः ॥
किमिन्दुरभ्रसञ्चच्छन्नो न संहरति कौमुदीम् ॥ ६७ ॥

ओष्ठं तद्दन्तदष्टं स्थगयसि करतः कीर्णकेशान्सुमौल्या ।
तत्पीनोत्तुङ्गचञ्चत्कुचरचितमहाकुङ्कुमार्द्रं च वक्षः ॥
वस्त्रेणास्या नखाग्रैर्लिखितगलतटं गोपयस्यच्छहारै- ।
र्दिग्व्यापी कामुभोगव्यतिकरजनितः केन गोप्योऽङ्गगन्धः ॥६८॥

वञ्चिता समयायानाद्विप्रलब्धेशिना यथा ॥

देशान्तरस्थिते नाथे यथा प्रोषितभर्तृका ॥ ६९ ॥
आलि यामो गतो नाथस्तथाप्यायाति नाधुना ॥
याम उत्तिष्ठ विश्वासः कोऽस्ति वञ्चकपूरुष ॥ ७० ॥
सौधोपरि स्थितवती सकरस्थगण्डा ।
दूरान्तरस्थपतिमात्मनि चिन्तयन्ती ॥
तत्पाणिपीडितकुचां च तदंकनिष्ठां ।
स्वां मन्यते पतियुतां वियुताऽपि तन्वी ॥ ७१ ॥
अव्यलीकविलम्बेशे विरहोत्कण्ठिता यथा ॥
सतुं सारयितुं वेच्छुर्यथा सा चाभिसारिका ॥ ७२ ॥
दूति प्रेयान्परिगतनटीहग्घटीभिः प्रबद्धो ।
नूनं नोचेत्प्रसरति विधौ कौमुदीं द्रावयान्तीम् ॥
प्रद्युम्नेन्दूपलमुरुतरस्फारगन्धे प्रवाति ।
मन्दं मन्दं मरुति शिशिरे किं विलम्बेत कान्तः ॥ ७३ ॥
स्वापांगाऽऽभेन्दुकान्तीक्षणपरिचितास्त्यक्तलज्जाः स्मरेषू- ।
त्पातश्रीजर्जरान्तःकरणविचलिताः फुल्लराजीवनेत्राः ॥
गाढाश्लेषाभिवाञ्छा गलरवमुखरा वञ्चितालीसमूहाः ।
श्रीकान्तान्सापराधानपि कठिणकुचाः स्निग्धकेशाः सरेयुः ॥ ७४ ॥
स्मरसि मनसि मातः कं सुरोमाञ्चिताङ्गी ।
मदविलुलितनेत्रा चित्रनारीपटस्था ॥
इव दिगनभिवीक्षा किं ह्रिया ब्रूहि गूढं ।
दहतकिमदनः (?) स्वद्रोहिणी शून्यचित्ता ॥ ७५ ॥
लिंगिनी शिल्पिनी दासी धात्रेयी प्रतिवेशिनी ॥
कारुः सख्यो सुदूत्यः स्युस्तदभावे स्वयं मता ॥ ७६ ॥
विंशतिः स्त्रीष्वलंकाराः सत्त्वजा यौवने मताः ॥
त्रयोऽप्यङ्गभवा भावो हावो हेलेति भाषिताः ॥ ७७ ॥
सप्तालंकृतयः शोभाकान्तिदीप्तिप्रगल्भताः ॥
माधुर्यं धैर्यमौदार्यमित्येताः परिभाषिताः ॥ ७८ ॥
लीलाविलासललिते किलिकिञ्चितविभ्रमौ च कुट्टिमितम् ॥
मोट्टायितबिब्बोकौ विच्छित्तिर्विहृतमाविविच्यन्ते ॥ ७९ ॥
सत्त्वं हि मनसो वृत्तिर्विशेषो विकृतिच्युतिः ॥

भावो हि भाव्यलंकारकृदादिविकृतिर्यथा ॥ ८० ॥

बालक्रीडास्वबद्धाद्दतिरलसद्दगाबद्धधम्मिल्लभारा ।
श्रोत्रे सम्भोगवार्तास्वपि नयति शनैराश्रितालीजनेभ्यः ॥
पुंसामंकं विशंकं तरलमृगदृगारोहति प्राग्यथा नो ।
साम्युद्भिन्नस्तनोद्यन्नवमदनकलानम्यमाना कुमारी ॥ ८१ ॥

भावो मानससम्भूतः शृङ्गारो विविधाक्रियाम् ॥
दृशां भ्रुवां विकारो यः स हावः स्मरजो यथा ॥ ८२ ॥

लसत्पञ्चबाणस्य बाणैरशेषैः । स्फुरद्भ्रूधनुर्मुच्यमानैर्निशातैः ॥
कटाक्षैर्हृदुद्भेदशक्तैः शरव्यं । सुभद्रांगना विध्यति त्वां लताङ्गी ॥८३॥

शृंगारद्योतको व्यक्तो यथा हेला स एव च ॥

वरतरमकरन्दास्वादमत्तां स्वदृष्टिं ।
मधुकरवरमालां चारुनिष्पन्दवृत्तिम् ॥
अलसलसदपांगां कामचञ्चत्पताकां ।
भवदनुनयदूतीं प्रेषयन्ती न तेऽस्यात् ॥ ८४ ॥

अङ्गालङ्करणं शोभा रूपतारुण्यतो यथा ॥

तामीषदुद्भिन्नकुचां मृगाक्षीं । स्वांगोरुशोभाजितसर्वभूषाम् ॥
नेपथ्यगेहे पुरतो निषण्णाः । क्षणं व्यलम्बन्त सुभूषयन्त्यः ॥ ८५ ॥

अतिरागरसापूर्णा कांतिः शोभैव सा यथा ॥

वासागारासिताया ललितकुचरुचोत्सारितं गण्डभासा ।
भग्नं कण्ठोपघूर्णत्कलरुचिरमहागानतो भर्त्सितं वा ॥
अन्यासंसर्गरोधिस्वपतितनुमहाबन्धरज्जूयिताक्षी- ।
प्रद्योतैः केशबन्धे निहितमिह तमो भारतेशो द्युलोके ॥ ८६

कांतिरेव च विस्तारगता दीप्तिर्यथा मता ॥

वाताञ्चत्पुष्पमूले बहलकिसलयच्छादिते कायकान्त्या ।
श्रीवल्लीमण्डपे सा स्वपतिभुजबलोत्सारितारातिमालाम् ॥
ध्वान्तालीं दर्शयन्ती चरति घनकुचोत्सारयन्ती कृशाङ्गी ।
गुञ्जन्मञ्जीरनादभ्रमरपिकरवैः कायजोद्रेकयन्ती ॥ ८७ ॥

त्रपोत्पन्नभयत्यागः प्रागल्भ्यं भणितं यथा ॥

घर्मासारा प्रचञ्चन्मणितघनरवा मुक्तकेशौघमेघा ।
नेत्रप्रद्योतविद्युत्प्रसरमुरुचिरा सालकास्येन्दुरम्या ॥

आरक्ताक्षी प्रभाश्रीशबलितमहिमभ्रूरुसुत्रामचापा ।
प्रावृट्कालोपमा सा रतनरचरिता शिक्षिकाऽभूत्कलानाम् ॥ ८८ ॥
माधुर्यं रम्यताऽश्लाघ्यवस्तुयोगेऽपि तद्यथा ॥
वल्काम्बरेणापि च चारुगुञ्जा- । फलोरुहारेण विभूषिताऽपि ॥
वनेचरी कुम्भकुचा नितम्ब- । भारेभयाना निरुणद्धि पान्थम् ॥८९
चलनेनाहतं चित्तवृत्तं धैर्यं भवेद्यथा ॥
निशि निशि शशिबिम्बो जाज्वलीतु स्वागात्र- ।
ज्वरपरिचितहारो दन्दहीतु प्रतप्तः ॥
अतनुरपि निहन्तु प्राज्यमेवं च भर्तुः ।
पितुरपि मम मातुः श्लाघ्यता नन्वहार्या ॥ ९० ॥
बह्वायासेऽपि चौदार्यं विनयोत्कर्षता यथा ॥
प्रस्वेदबिन्दुवदनां श्लथकेशबन्धां ।
क्रीडारुणाक्षियुगलां रदपीडितोष्ठाम् ॥
कण्ठस्तनादिनखरक्षतचन्द्रखण्डां ।
तुष्टो विलोक्य निधिपो विनयान्वितां ताम् ॥ ९१ ॥
चेष्टितैर्मधुरैर्लीला प्रियानुकरणं यथा ॥
उषितं शयितं हसितं रमितं । भ्रमितं सुगतं सुकृतम् ॥
प्रियगं रमणीव नटी सरसा । वरवासगृहेऽनुचकार वरा ॥ ९२ ।
चेष्टातिशयनं गात्रे विलापः प्रियवीक्षणात् ॥
स्फुटत्कलपद्मा स्मितोत्केसराढ्या । लसद्वाग्द्विरेफोरुझंकाररम्या ॥
अपास्तोरुधैर्या मरालारुयाना । स्मरं पद्मिनी स्वं बभौ व्यञ्जयन्ती ॥
मसृणं सुकुमारोऽङ्गविक्षेपो ललितं यथा ॥
पुष्पाञ्जलिं स्फुरदपांगमुपक्षिपन्ती । श्रीहस्तपल्लवविवर्तनतो लपन्ती ॥
पादारुणाम्बुजयुगं भुवि विक्षिपन्ती । भ्रूभंगमादिवयसा नृपमालुलोके ॥
शुगुरुड्रोषादिसांकर्यं यथा तु किलकिञ्चितम् ॥
द्यूते भर्त्रा जिते व्याचितवसनकुचादर्शनेनास्य चित्तं ।

भ्रान्तं कृत्वा विजिग्ये पुनरपि विजिते सावधानेन भर्त्रा ॥
कोपारक्ताक्षिवीक्षा भ्रमितपतिमना जेतुकामा लतांगी।
तेनैवास्मिन्जिते सा रुदितनतमुखी तुष्टिगाऽस्यं लुलोके ॥ ९५ ॥

सम्भ्रमाद्विभ्रमो भूषाव्यत्ययः पुरुषागमे ॥
निशम्य कान्तं बहिरागतं तं। मञ्जीरयुग्मं करयोश्च काञ्चीम् ॥
कण्ठे च हारं मुकुटीतटे सा। भालेऽञ्जनं दृक्तिलकं करोति ॥ ९६

कुप्येत्तुष्टान्तरालिङ्गमुखे कुट्टिमितं यथा ॥
आलिंगन्तं घटकुचयुगं वक्षसीवातिलीनं ॥
चुम्बन्तं तं भ्रुकुटिरुचिरा वारयन्ती कराभ्याम् ॥
अन्तस्तुष्टा बहिरुरुरुषा मान्मथं व्यञ्जयन्ती।
स्वं भावं सा भवति पुलकैः फुल्लराजीवनेत्रा ॥ ९७ ॥
मतिस्तत्त्वेन चित्रादावपि मोट्टायितं यथा ॥
सांगभंगादि वा नाथं स्मृत्वा मोट्टायितं यथा ॥ ९८ ॥
चारुचित्रगतं नाथं दृष्ट्वा राजीवलोचना ॥
मृदुपल्लापिनी व्रीडानतास्या रागिणी स्थिता ॥ ९९ ॥
मदनदवशमाय प्रस्तुतायां कथायां।
तव नृपवर सख्याजृम्भितैर्लोलनेत्रा ॥
कठिणवरकुचाग्रोन्मेषमुत्कीर्णयन्ती।
वलयितमृदुसारोदग्रबाहूज्वलाऽस्थात् ॥ २०० ॥

गर्वावेशस्तु बिब्बोकः कथितोऽनादरो यथा ॥
ऊरुश्रोणिकुचान्स्पृशन्व्यपनयँस्तत्प्रोतचीनाञ्चलम्।
मृग्याम्ते तिलकालका इति पदालीलातिलोलांगुलिः ॥
भ्रूभङ्गोरुतरङ्गनर्तितदृशा दृष्टोऽस्यवज्ञं तया।
गर्वावेशविचित्रया नवरतेनाहं कृतार्थीकृतः ॥ १ ॥

कार्ये स्वल्पोऽप्यलङ्कारो विच्छित्तिस्तुष्टिकृद्यथा ॥
तस्या अलक्तरचितं मकरं कपोले। तन्नोजतोन्तरितरागमुदुद्गतं वा ॥

दृष्ट्वाऽन्तरंगपरितोषगतश्चुचुम्ब । प्रेमातिरेकमधुराधरमुत्पलक्ष्याः ॥

मध्योक्तं व्रीडया वाच्यमपि तद्याहृतं यथा ॥

एणाक्षी लोलतारे मयि च शबलिते निक्षिपन्ती सुनेत्रे ।
पौनःपुन्येन लज्जास्मितनतवदना सामिभिन्नस्फुटोष्ठम् ॥
जिह्वाप्रोक्तिं दधाना भुवमपि चरणांगुष्ठतः सल्लिखन्ती ।
स्वान्तस्थं तद्दुनोति स्वहृदयमपि मे न ब्रवीति स्फुरन्ती ३ ॥

*लक्ष्मोदाहृतितः प्रोक्तो नेतृभेदो मनागिति ॥*

शेषस्तु कामशास्त्रादौ निस्तरेण विबुध्यताम् ॥ ४ ॥
वक्तुमिच्छति चेद्ब्रूयाद्राजसंसदि कोविदः ॥
गलावलम्ब्यलङ्कारचिन्तामणिविभूषणः ॥ ५ ॥
अल्पज्ञत्वात्प्रमादाद्वा स्खलितं तत्र तत्र यत् ॥
संशोध्य गृह्यतां सद्भिः श्लिष्टावकरदृष्टिवत् ॥ ६ ॥

इत्यलङ्कारचिन्तामणौ रसादिनिरूपणो नाम पञ्चमः परिच्छेदः ॥

---

जगत्प्रपूज्यविन्ध्याग्रे इक्ष्वाकुवरवंशजम् ॥
सुरासुरादिवन्द्यांघ्रिदोर्बलीशं नम्याम्यहम् ॥ १ ॥
राजाधिराजचामुण्डराज्ञा निर्मितपत्तनम् ॥
तत्पुरे स्थितवतां चारुकीर्तिपण्डितयोगिनाम् ॥ २ ॥
प्लवसंवत्सरे मासे शुक्ले च सुशरद्दतौ ॥
आश्विजे च चतुर्दश्यां युक्तायां गुरुवासरे ॥ ३ ॥
एतद्दिनेष्वलंकारचिन्तामणिसमाह्वयम् ॥
सम्यक्पठित्वा श्रुत्वाऽहं संपूर्णं शुभमस्तुनः ॥ ४ ॥
काश्यपे नाम्निगोत्रे च सूत्रे चाह्वाननाम्नि च ॥
प्रथमानुयोगशाखायां वृषभप्रवरे पि च ॥ ५ ॥
एतद्वंशेषु जातोऽहं——

एतावत्पर्यंतमेव प्राचीनपुस्तके लभ्यते । इत उत्तरं एतच्छ्लोकपूर्तिपर्यन्तमेव स्यादिति भाति इति शुभम् ॥

# शुद्धिपत्रम् ।

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ५ | शान्तयेऽस्तुः | शान्तयेऽस्तु |
| २ | १ | व्र्युपत्ति- | व्युत्पत्ति– |
| ३ | १५ | भूभूक्प- | भूभुक्प– |
| ३ | ,, | तनुजामात्या- | तनुजामात्य- |
| ३ | २४ | सम्पद्यक्त | सम्पद्युक्तं |
| ४ | २१ | पुष्ठ | पुष्ट |
| ७ | २१ | अञ्जालि- | अञ्जली- |
| ९ | २० | छाद्दुःख | छाद्दुःखं |
| १२ | ५ | तोऽतद्भुम् | तोऽद्भुतम् |
| १२ | २१ | पृष्ठं | पृष्टं |
| १६ | १७ | जाति ॥: | जातिः ॥ |
| २० | ७ | पादपात्रं | पादमात्रं |
| २४ | ४ | चन्महीन | जन्महीन |
| ,, | १५ | धुनिः संश्चलता- | ध्वनिः सश्चलतां |
| ३२ | २५ | केवलेनाखिलार्थदृक् ॥ | केनाखिलार्थदक ॥ |
| ४१ | १८ | अन्तान्त- | अतान्त- |
| ४२ | २४ | कक्ष मानन- | कक्षमानन- |
| ४९ | २ | प्रप्तिर्यस्य | प्राप्तिर्यस्य |
| ,, | २३ | निरा | गिरा |
| ५३ | ९ | मारेप- | मारोप- |
| ,, | १६ | अर्थसाम्येन च | अर्थसाम्ये न च |
| ५५ | २६ | द्रपकादि | द्रूपकादि |
| ६३ | ५ | क्वचिन्नमतः | क्वचिन्नामतः |
| ,, | १० | देवेन्द्र त्वं | देवेन्द्रस्त्वं |
| ६५ | २४ | ततिः श्चक्रिणः | ततिश्चक्रिणः |
| ६६ | २४ | श्रीता | श्रिता |
| ६७ | ९ | रूपकादिदं | रूपकमिदं |
| ७२ | ८ | न्वन्दी–रूपकं दर्प | नन्दि–रूपकन्दर्प |
| ,, | ११ | शतमन्य | शतमन्यु |
| ३ | ३ | क्लप्ति | क्लप्तिः |

# शुद्धिपत्रम् ।

| पृष्ठम | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७५ | १३ | पृष्ठाङ्गा | पृष्ठाङ्गा |
| ७८ | २० | मैत्री वाभा- | मैत्रीमभा- |
| ७९ | ८ | भीरता | भरिता |
| ८५ | २० | वंशातर | वंशान्तर |
| ८७ | १३ | गमनात | गमनात् |
| ८८ | ६ | पृष्ठवते | पृष्टवते |
| ८९ | २२ | विशेण | विशेषेण |
| ९४ | १७ | स्वकोप–शरैध | सकोप शरौघ |
| ९५ | ८ | साथनेन | साधनेन |
| १०४ | ८ | स्वेदोकर्षण | स्वेदोत्कर्षण |
| ११४ | १ | प्रसवति जनता दुर्जुगु- | प्रवसति जनताजुगुप्स्यश्च |
| १२० | १४ | ररिसनायां | ररिसेनायां |
| १२५ | १५ | तथा समर्थ | तथाऽसमर्थ |
| १२८ | १५ | कर्मकारस्या | कर्मकारकस्या |
| १२९ | २५ | काता विध्यारण्यं | कान्ता विन्ध्यारण्यं |
| १३१ | ७ | सेर्ष्या | सेर्ष्या |

पृष्ठम् ९ श्लोकः ८१ अष्टदलपद्मबन्धः॥

पृष्ठम् ९ श्लोकः ८१ गोमूत्रिकाबन्धः॥

इ ला मा तु ला मि
क पा ला कु ती लां

पृष्ठम् ९ श्लोकः ८१ एकाक्षरान्तरेण गोमूत्रिकाबन्धः॥

पृष्ठम् ९ श्लोकः ९६ चक्रबन्धः॥

पृष्ठम् ३४ श्लोकः १५० अनंतरपादमुरजबन्धः॥

अभिषिक्तः सुरैर्लोकैः।
त्रिभिर्भक्तिपरैर्न कैः॥
वासुपूज्य मयीशेशाः।
त्वं सुपूज्यः कयीदृशाः॥१॥

पृष्ठम् ३४ श्लोकः ४८ गोमूत्रिकाबन्धः॥

पृष्ठम् ३५ श्लोकः १५१ इष्टपाद मुरजबन्धः॥

क्रमताभक्रमं क्षेमं धीमतामर्च्यमश्रमम्।
श्रीमद्भिमल्लमर्च्यं मं वामकामं नमक्षमम्॥

पृष्ठम् ३५ श्लोकः १५२ अनन्तरपादमुरजबन्धः॥

तमोनुद मतातीत।
ममोत्तम कृतामृत॥
ततामित मतातात।
मतातीत मृतेमित॥

पृष्ठम् ३५ श्लोकः ५१ गोमूत्रिकाबन्धः॥

पृष्ठम् ३५ श्लोकः ५२ अन्तरित मुरजबन्धः॥

ग्ला नं चै न ध्व न स्वे न ।
ज्ञा न ही न घ नं ज न ॥
अ तं ला न वा म ज्ञा न ।
स्था न स्था न त नं द न ॥

पृष्ठम् ३५ श्लोकः ५२ षोडशदलपद्मबन्धः॥

पृष्ठम् ४२ श्लोकः ७१ निस्सालबन्धः ॥

पृष्ठम् ४२ श्लोकः ७३ ब्रह्मदीपिकाबन्धः ॥

